दोषमस्रावयत् स्तब्धं कण्डूजाड्यादिकारि तत् ।
नाञ्जयेत् भीतवमितविरिक्ताशितवेगिते-॥ १७॥
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्छोकजागरे ।
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ॥ १८ ॥
अजीर्णेऽग्न्यर्कसन्तप्ते, दिवासुप्ते पिपासिते ।
अतितीक्ष्णमृदुस्तोकबहुच्छघनकर्कशम् ॥ १९ ॥
अत्यर्थशीतलं तप्तमञ्जनं नावचारयेत् ॥ २० ॥
अथ समसुखोपविष्टस्योपविष्टो वामाङ्गुष्ठेन वर्त्मोपरमुत्क्षिप्य
कृष्णभागस्याधः कनीनकादपाङ्गं यावदञ्जनं नयेत् ।
अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः ।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २१ ॥
नेत्रं व्याप्नोति सहसा न चोन्मेषनिमेषणम् ।
निष्पीडनं वा वर्त्मभ्यां क्षालनं वा समाचरेत् ॥ २२ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २३ ॥
वर्त्मप्राप्ताञ्जनाद्दोषो रोगान् कुर्यात्ततोन्यथा ।
नयने ताम्यति स्तब्धे शुष्के रूक्षेभिघातिते ॥ २४ ॥
वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलक्षणे ।
कृच्छ्रोन्मीलसिराहर्षसिरोत्पातवमोर्जुनैः ॥ २५ ॥
स्यन्दमन्थान्यतोवातवातपर्यायशुक्रकैः ।
आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ॥ २६ ॥
निवाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः ।
काले साधारणे प्रातस्सायं चोद्यानसाधिनः ॥ २७ ॥
यवमाषमयीं पाली नेत्रकोशाद् बहिःसमाम् ।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ।
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलापितम् ॥ २८ ॥

आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः ।
मात्रां विगणयेत्तत्र वर्त्मसन्धिग्सितासिते ॥ २९ ॥
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥ ३० ॥
शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश ।
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ३१ ॥
कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।
पिबेच्च धूमं नेक्षेत व्योम रूपं च भासुरम् ॥ ३२ ॥
इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ।
स्वस्थे च त्र्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ ३३ ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मतो रुजाः ॥ ३४ ॥

(वाहट)

आदित्यमग्निमादर्शमाकाशं मारुतं रजः ।
प्रतिभागश्च चन्द्रस्य धूमं च कृततर्पणः ॥ ३५ ॥
न पश्येद् दशरात्रं तु मैथुनं परिवर्जयेत् ।
व्यायाममुच्चैर्भाष्यं च दिवास्वप्नं तथैव च ॥ ३६ ॥
तर्पणं तर्पयत्यक्षि निग्रहमुपशमयेच्च तत् ।
दृष्टिप्रसादं स्थैर्यं च जनयेन्नात्र संशयः ॥ ३७ ॥

(गजवैदेही)

ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च ।
पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् ॥ ३८ ॥
यथादोषोपयुक्तं तु नातिप्रबलमोजसा ।
रोगमाश्च्योतनं हन्ति सेकस्तु बलवत्तरं ॥ ३९ ॥
सेकस्य कालो द्विगुणः पुटपाकात् क्रमान्मतः ।
अथवा कार्यनिर्वृत्तिरुपयोगात्तथा भवेत् ॥ ४० ॥
योगायोगौ स्नेहसेके तर्पणोक्तौ प्रचक्षते ।
सर्पिषा सुखोष्णेन योज्यस्सेको हिमेन वा ॥ ४१ ॥

(मद्दपा०)

द्व्यङ्गुल*बाहुल्यं स्वाङ्गुष्ठोदरसम्मितम् ।
द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदम् ॥ ४२ ॥
नेत्रायामत्रिभागं तु कृष्णमण्डलमुच्यते ।
कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥ ४३ ॥
मण्डलानि च सन्धींश्च पटलानि च लोचने ।
यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥ ४४ ॥
पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि च ।
पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतः परः ॥ ४५ ॥
कृष्णशुक्लगतस्त्वन्यः कृष्णदृष्टिगतः परः ।
ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः ॥ ४६ ॥
द्वे वर्त्मपटले विद्याच्चत्वार्यन्यानि चक्षुषि ।
जायते तिमिरं येषु व्याधिः परमदारुणः ॥ ४७ ॥
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥ ४८ ॥

विदाह्यसात्म्यातिविरुद्धशीत-
क्षाराम्लतीक्ष्णोष्णगुरुद्रवान्नैः ।
तीक्ष्णोग्रगन्धादविहास्यभाष्य-
क्रोधादिशोकैः प्रततेक्षणाद्वा ॥ ४९ ॥

मद्याङ्गनानामतिसेवनेन
मूर्द्धाभिघाताम्बुनिमज्जनाभ्याम् ।
अव्यच्छिरस्कोच्छ्रितशायिनश्च
ज्वरोपतापादृतुपर्ययाच्च ॥ ५० ॥

तृष्णाभितप्तस्य जलप्रवेशाद्
दूरेक्षणात् स्वप्नविपर्ययाच्च ।
शुक्तारनालाम्लकुलत्थमाष-
निषेवणाद्वेगविनिग्रहाच्च ॥ ५१ ॥

---

* द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितं (विस्तृतम्) इति मुनिमुख्यानु-
ारिनिषेवणेन इति पाठान्तरम् ।

रुग्वती पिल्लका स्यादञ्जननामिका। यत्तु वर्त्म सन्निपाताद् बहिः शून्यमन्तः सूक्ष्मच्छिद्राश्चितं सास्रावमन्तरुदकं तद् बिसवर्त्म। सरक्तैर्दोषैरकस्मात् मुहुरुत्सेधं म्लानवदुत्क्लिष्टवर्त्माख्यम्। सरक्तैर्मलैर्बाह्यान्तःश्यावं शूनं सकण्डूपारुक्क्लेदं वर्त्म श्याववर्त्माख्यम्। श्लिष्टाख्य वर्त्मनी श्लिष्टे कण्डूश्वयथुरागिणी। अन्तर्वर्त्म खरश्लक्ष्णसिकतोपमपिटकाचितं सिकतावर्त्म। यदा सपित्तं रक्तं वर्त्म विदहेत् तदा कृष्णं कर्दमोपमं कर्दममुच्यते। बहलैस्सवर्णैस्समैर्मांसैश्चितं बहलवर्त्म। कुकूणको नाम शिशोर्दन्तोत्पत्तिनिमित्तजः। तेन बालः चञ्चत्ताम्राक्षः वीक्षणाक्षमः सवर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्दनः स्यात्। दोषैः पक्ष्माशयस्थैः तीक्ष्णाग्राणि कण्टकाभानि खराणि भवन्त्यन्तर्मुखानि रोमाणि। तैर्घृष्टमक्षि शूयते। सदाक्षवर्त्मसंकोचं च। तैरुद्धृतैरल्पाहं शान्तिः। स पक्ष्मोपरोधाख्यः। बहिर्वर्त्म कनीनके कठिनो ग्रन्थिरस्रपूयस्राव्यलजीनामा मुहुराध्मायते। सरक्तैर्दोषैरन्तर्वर्त्म मांसपिण्डाभश्वयथुरर्बुदो नाम।

(वाहटे पाठ॰)

आद्योऽत्र भेषजैस्साध्यो द्वौ ततोऽर्शश्च वर्जयेत्।
पक्ष्मोपरोधो याप्यः स्याच्छेषाञ्छस्त्रौषधैर्जयेत्॥ ५६॥

कुट्टयेत् पक्ष्मसदनं छिन्द्याच्चेत्यपि चार्बुदम्।
भिन्द्याल्लगणकुम्भीकाबिसोत्सङ्गाञ्जनालजीः॥ ५७॥

पोथकीसिकताश्यावश्लिष्टोत्क्लिष्टचतुष्टयम्।
सकर्दमं सबहलं विलिखेत् सकुकूणकम्॥ ५८॥

कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्काम्बुसाधितम्।
ससितं योजयेत्स्निग्धं नस्यधूमाञ्जनादि च॥ ५९॥

कुम्भीकावर्त्म लिखितं सैन्धवप्रतिसारितम्।
यष्टीधात्रीपटोलीनां क्वाथेन परिषेचयेत्॥ ६०॥

निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः।
बहिः कोष्णाम्बुतप्तेन स्वेदितं वर्त्म वाससा॥ ६१॥

निर्भुज्य नखान्तरितं वामाङ्गुष्ठाङ्गुलीधृतम् ।
न संराते चलति वा वर्त्मैवं सर्वतस्ततः ॥ ६२ ॥

मण्डलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदाङ्कितम् ।
लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥ ६३ ॥

फेनेन तोयराशेर्वा पिचुना प्रमृज्यसृक् ।
स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥ ६४ ॥

यथास्वमुक्तैरत्तु च प्रक्षाल्योष्णेन वारिणा ।
घृतेनाऽऽसिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ॥ ६५ ॥

ऊर्ध्वाधःकर्णयोर्दत्त्वा पिण्डीश्च यवसक्तुभिः ।
तृतीयेऽहनि मुक्तस्य परिषेकं यथायथम् ॥ ६६ ॥

कुर्याच्चतुर्थे नस्यादीन्मुञ्चेदेवाह्नि पञ्चमे ।
मर्मं नखनिभं शोफकण्डूघर्षापपीडितम् ॥ ६७ ॥

विद्यात्सुलिखितं वर्त्म लिखेद् भूयो विपर्यये ।
रूक्पक्ष्मवर्त्मशातनस्रंसनान्यतिलेखनात् ॥ ६८ ॥

स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ।
पिटकां व्रीहिवक्त्रेण भित्त्वा तु कठिनोन्नताः ॥ ६९ ॥

निष्पीडयेदनु विधिः परिशेषस्तु पूर्ववत् ।
लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ॥ ७० ॥

पित्तास्रोक्लिष्टयोस्स्वादुस्कन्धसिद्धेन सर्पिषा ।
सिराविमोक्षस्निग्धस्य त्रिवृच्छ्रेष्ठं विरेचने ॥ ७१ ॥

पक्ष्मणां शातने सूच्या रोमकूपान् विकुट्टयेत् ।
स्रावयेद्वा जलूकाभिः पयसेक्षुरसेन वा ॥ ७२ ॥

वमन नावनं सर्पिः शृतं मधुरशीतलैः ।
संचूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः ॥ ७३ ॥

ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम् ॥ ७४ ॥

(माहरे)

पोथकीर्विलिख्य शुण्ठीसैन्धवमागधिकाचूर्णैः प्रतिसार्य प्रक्षाल्य चोष्णाम्भसा खदिरसाराढकीशिग्रुपत्रकषायेण सेचयेत् । ततश्चाम्रजम्बूप्रवालक्वाथेनाऽऽश्च्योतनं त्रिफलाखदिरसारोदकेन वा मधुसंयुक्तेन । विडङ्गलाक्षादार्वीत्वग्गैरिकालमनोह्वाचूर्णैः क्षौद्रान्वितोऽञ्जनम् ।

(सङ्ग्रहे)

कफोत्क्लिष्टे विलिखिते सक्षौद्रैः प्रतिसारयेत् ।
सूक्ष्मैः सैन्धवकासीसमनोह्वाकणताक्ष्यजैः ॥ ७५ ॥
वमनाञ्जननस्यादि सर्वं च कफजिद्धितम् ।
कर्तव्यं लगणेऽप्येतदशान्तौ वह्निना दहेत् ॥ ७६ ॥
कुकूणे लिखितं वर्त्म स्रुतासृग्वाम्बुजन्मभिः ।
धात्र्यश्मन्तकजम्बूत्थपत्रक्वाथेन सेचयेत् ॥ ७७ ॥
द्विनिशालोध्रयष्ट्याह्वरोहिणीनिम्बपल्लवैः ।
कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोन्वितैः ॥ ७८ ॥

(वाग्भटे)

मरिचविडङ्गहरिद्राकल्कसिद्धं तैलं प्रतिमर्शः । मूर्वाताम्ररजसी स्तन्यपिष्टे पिण्डाञ्जनम् । शङ्खमनःशिलासैन्धवरसाञ्जनक्षौद्रैर्वा रसक्रिया । लोहशिवाटिकामृदः कपाले नैकशः प्रतप्ताः स्तन्येन निर्वापिताः श्लक्ष्णचूर्णमञ्जनम् । लाक्षानक्तमनःशिलागैरिकदार्वीभिर्वा । पुनःपुनश्च धात्री वमनविरेचनैरुपपादयेत् ।

(सङ्ग्रहे)

पथ्याम्लदध्याज्यगुडं च तैलं
सक्षौद्रसिन्धुस्वरसं लवण्याः ।
ताम्रेण कंसे बहुशोऽवघृष्टं
कुकूणकं तत् सकृदेव हन्ति (?) ॥ ७९ ॥

(योगामृते)

कुकूणकहरं श्रेष्ठं मधुना सह सैन्धवम् ।
पिल्लाक्ष विनिहन्त्याशु शुक्लनाशनमुत्तमम् ॥ ८० ॥

पक्ष्मोपरोधे समुपचितं वर्त्म लेखनेनोत्क्षिप्य रक्तं विस्रावणेन सशोफं शिरोविरेककवलनस्यैर्यापयेत् ।

(सङ्ग्रहे)

२-५२५९

पक्ष्मरोधे प्रवृद्धेषु शुद्धदेहस्य रोमसु ।
उत्सृज्य द्वौ भ्रुवोधस्तात् भागौ भागञ्च पक्ष्मतः ॥ ८१ ॥
यवमात्रं यवाकारं तिर्यक् छित्वार्द्रवाससा ।
अपनेयमसृक् तस्मिन्नल्पीभवति शोणिते ॥ ८२ ॥
सीव्येत् कुटिलया सूच्या मुद्गमात्रान्तरैः पदैः ।
बद्ध्वा ललाटे पट्टञ्च तत्र सीवनसूत्रकम् ॥ ८३ ॥
नातिगाढश्लथं सूच्या निक्षिपेदथ योजयेत् ।
मधुसर्पिःकवलिकां नचास्मिन् बन्धमाचरेत् ॥ ८४ ॥
न्यग्रोधादिकषायैश्च सक्षीरैस्सेचयेद्रुजि ॥ ८५ ॥

(वाहटे)

व्रणवेदनायां वस्त्रपटेन यष्टीमधुकचूर्णेन संस्कृतं सर्पिः परिषेकः । वटादिकषायाश्च सक्षीराः ।

(वृद्धे)

पञ्चमे दिवसे सूत्रमपनीयावचूर्णयेत् ।
गैरिकेण व्रणं युञ्ज्याचीक्ष्णं नस्याञ्जनादि च ॥ ८६ ॥
दहेदशान्तौ निर्भुज्य वर्त्मदोषाश्रयां बलिम् ।
सन्दंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ८७ ॥
सूच्यग्रेणाग्निवर्णेन दाहो बाह्यालजे पुनः ।
भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च ॥ ८८ ॥

(वाहटे)

चिञ्चागृष्टीमयूरीसुरसलवणिकामञ्जरीर्गोक्षुराणां
पत्रात्सारं समांशं सदधिमधुघृतैराज्यसिन्धूत्थतैलैः ।
युक्तं कारञ्जघृष्टं स्फटिकयुतमिदं चाञ्जनं वर्त्मरोगं
पिल्लाख्यं चार्मरोगं शमयति निमिना प्रोक्तमेतद्यथैव ॥
अलं दारु-वचा पिष्टा सुरसापत्रवारिणा ।
छायाविशुष्का गुलिका क्लिन्नवर्त्मनिवारिणी ॥ ९० ॥

(सिद्धसारे)

इति वर्त्मरोगचिकित्सा ॥

जलास्रावः कफास्रव उपनाहः रक्तास्रावः, पर्वणी, पूयास्रावः पूयालसोऽलजी क्रिमिग्रन्थिः इति नव रोगा वर्त्मशुक्लमण्डलसन्धिजाः। तत्र वायुर्जलवाहिसिरास्थः कनीनकादश्रु स्रावयते रुग्रागशोफादिना स जलास्रावो नाम। कफात् श्वेतं सान्द्रं पिच्छिलमश्रु स्रवेत्। स कफास्रावः। दृष्टिसन्धौ महानपाको नीरुजः कण्डूमान् मृदुपिच्छिलो ग्रन्थिरुपनाहः। रक्तेन ताम्रो नातिमान्द्रो बहुश्च स्रावो रक्तास्रावः। शुक्ले वर्त्मसन्धिमूला मुद्गमात्रा महादाहशूला ताम्रा पिटका पर्वणी। सा च भिन्ना रक्तमेव स्रवति। दोषास्सरक्ता वर्त्मसन्धेः कनीनकाच्चक्षुर्मांसपाकतः सास्रपूयं स्रावयन्ति स पूयास्रावः। कनीनकसन्धिजश्शोफसंरम्भपूर्वकः पक्वस्सान्द्रपूतिपूयास्रावस्सवेदनः सूक्ष्मो व्रणः पूयालसो नाम। कनीनस्यान्तस्स्यादुद्दाहश्शोफः स्याद् साऽलजी। अपाङ्गे वा कनीने वा सन्धिगाः क्रिमयः सकण्डूपातोदं सपूयास्रावं ग्रन्थिं कुर्युः। स क्रिमिग्रन्थिः।

(वाहट पाठ)

उपनाहक्रिमिग्रन्थिपूयालसकपर्वणीः।
शस्त्रेण साधयेत् पञ्च साऽलजीनास्रवांस्त्यजेत् ॥ ९१ ॥

(वाहट)

रसाञ्जनञ्च मुस्थं च यष्टीमधुकमेव च।
अञ्जनेन गमं विद्धि जलास्रावविनाशनम् ॥ ९२ ॥

(तन्त्रान्तरे)

उपनाहं भिषक् स्विन्नं भित्वं व्रीहिमुखेन च।
लेखयेन्मण्डलाग्रेण ततश्च प्रतिसारयेत् ॥ ९३ ॥
पिप्पलीक्षौद्रसिन्धूत्थैर्बध्नीयात्पूर्ववत्ततः।
पटोलपत्रामलककषायेनाश्च्योतयेच्च तम् ॥ ९४ ॥
पर्वणी बडिशेनात्ता बाह्यसन्धित्रिभागतः।
वृद्धिपत्रेण वर्ध्यार्धे स्यादसृग्गतिरन्यथा ॥ ९५ ॥
चिकित्सा चार्मवत् क्षौद्रसैन्धवप्रतिसारिता।
पूयालसे सिरां विद्ध्येत्ततस्तमुपनाहयेत् ॥ ९६ ॥
कुर्वीत चाक्षिपाकोक्तं कर्म सर्वं यथाविधि।
सैन्धवार्द्रककासीसलोहताम्रैः सुचूर्णितैः ॥ ९७ ॥

चूर्णाञ्जनं प्रयुञ्जीत सक्षौद्रां वा रसक्रियाम् ।
पूयालसे त्वशान्तेऽन्तर्दाहः सूक्ष्मशलाकया ॥ ९८ ॥

क्रिमिग्रन्थिं करीषेण स्विन्नं भित्त्वा विलिख्य च ।
त्रिफलाक्षौद्रकासीससैन्धवैः प्रतिसारयेत् ॥ ९९ ॥

(वाग्भटे)

शुक्तिकाशुक्लार्मबलासग्रथितपिष्टकसिरोत्पातसिराहर्षसिराजालशोणितार्मार्जुनप्रस्तार्यर्मस्नाय्वर्माधिमांसार्मसिरापिटका इति त्रयोदश रोगा शुक्लभागजाः । पित्तं वृद्धं शुक्ले श्यावकृष्णपीतान् पिशितनिभान् बिन्दून् वा सर्वं शुक्लमण्डलं मलाक्तादर्शतुल्यं वा कुर्यात् । स रोगस्सशकृद्भेदतृड्ज्वरः शुक्तिकाख्यः । कफाच्छुक्ले समं सितं चिरवृद्ध्याधिमांसं शुक्लार्माख्यम् । कफाच्छुक्ले नीरुजः सवर्णो बहलो जलबिन्दुनिभो मृदुश्शोफो बलासग्रथिताख्यः । शुक्ले शालिपिष्टधवलस्त्वगुत्सेधो बिन्दुः पिष्टकाख्यः । रक्तेन रक्तराजीततं सवेदनमशोफाश्रु शुक्लं यदुच्यते स सिरोत्पातः । उपेक्षितस्स एव वा एव राजीर्वर्धयन् ताम्रमक्षि वीक्षणाक्षमञ्च कुर्यात् । स सिराहर्षः । शुक्ले रक्तं घनमुन्नतं सिराजालं सिराजालाख्यम् । शुक्ले समं पद्मनिभमधिमांसं शोणितार्माख्यम् । शुक्ले शशरुधिरनिभो नीरुगेको बिन्दुरर्जुनाख्यः । मरुत्कोपान्नीरुजमाशुवृद्धि श्यावलोहितं विस्तृतं मांसं प्रस्तार्यर्मसंज्ञम् । स्नावराजिममधिमांसं स्नाय्वर्मसंज्ञम् । शुष्कासृक्पिण्डवच्छ्यावं पृथु घनं मांसमधिमांसार्म । सरुग्दाहघर्षास्सर्षपोपमाः कृष्णमण्डलासन्नास्सिरावृताः पिटकास्सिरापिटकाख्याः ।

(वाग्भटे पाठः)

शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनम् ।
साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम् ॥ १०० ॥

नवोत्थं तदपि द्रव्यैरर्मोक्तं यत्तु पञ्चधा ।
तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतम् ॥ १०१ ॥

चर्मोद्दालादुच्छ्रायि दृष्टिप्राप्तं च वर्जयेत् ।
पित्ताभिष्यन्दवच्छुक्तिं बलासाह्वयपिष्टकौ ॥ १०२ ॥

कफाभिष्यन्दवन्मुक्त्वा सिराव्यधमुपाचरेत् ।
जातीमुकुलसिन्धूत्थदेवदारुमहौषधैः ॥ १०३ ॥
पिष्टैः प्रसन्नया वर्तिश्शोफकण्डूघ्नमञ्जनम् ॥ १०४ ॥
(वाहटे)

सैन्धवमरिचकट्फलशङ्खसमुद्रफेनैर्वर्तिः पिष्टकेऽञ्जनम् ॥

शुण्ठीशिग्रुफलपिप्पलीसैन्धवचूर्णो बीजपूररसाप्लुतोऽञ्जने पिष्टकमपहरति । तद्वत्त्रिकटुककट्फलचूर्णो बलासग्रथितं च ।
(संग्रहे)

रक्तस्यन्दवदुत्पातहर्षजालार्जुने क्रिया ।
सिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनम् ॥ १०५ ॥
सिराहर्षे तु मधुना श्लक्ष्णपिष्टं रसाञ्जनम् ।
अर्जुने शर्करामस्तुक्षौद्रैराश्च्योतनं हितम् ॥ १०६ ॥
स्फटिकः कुङ्कुमं शङ्खो मधुकं मधुनाञ्जनम् ।
मधुना वाञ्जनं शङ्खः फेनो वा सितया सह ॥ १०७ ॥
(वाहटे)

तुत्थकरसेन सशर्करेण आश्च्योतनं मस्तुना वा ।
(संग्रहे)

अर्मोक्तं पञ्चधा तत्र तनु धूमाविलञ्च यत् ।
रक्तं दधिनिभं यच्च शुक्रवत्तस्य भेषजम् ॥ १०८ ॥
उत्तानस्येतरत् स्विन्नं स सिन्धूत्थेन चाञ्जितम् ।
रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ १०९ ॥
इत्थं संरोपिताक्षस्य प्रचलेऽर्माधिमांसके ।
भृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥ ११० ॥
अपाङ्गमीक्षमाणस्य वृद्धेऽर्मणि कनीनकात् ।
बली स्याद्यत्र तत्रार्म बडिशेनावलम्बितम् ॥ १११ ॥
नात्यायतं मुचुण्ड्या वा सूच्या सूत्रेण वा ततः ।
समन्तान्मण्डलाग्रेण मोचयेदस्य मोक्षितम् ॥ ११२ ॥
कनीनकमुपानीय चतुर्भागावशेषितम् ।
छिन्द्यात्कनीनके रक्षेद्वाहिनीश्चाऽश्रुवाहिनीः ॥ ११३ ॥

कनीनकवधादश्रुनाडी चाक्षिण प्रवर्तते ।
उद्धेर्मणि तथापाङ्गात् पश्यतोऽस्य कनीनकम् ॥ ११४ ॥
सम्यक् छिन्नं मधुव्योषसैन्धवप्रतिसारितम् ।
उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥ ११५ ॥
बध्नीयात् सेचयेन्मुक्त्वा तृतीयादिदिनेषु च ।
करञ्जबीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥ ११६ ॥
सक्षौद्रैर्द्विनिशालोध्रपटोलीयष्टिकिंशुकैः ।
कोरण्डमुकुलोपेतैर्मुञ्चेदेवाक्षि सप्तमे ॥ ११७ ॥
सम्यक् छिन्ने भवेत् स्वास्थ्यं हीनातिच्छेदजान् गदान् ।
सेकाञ्जनप्रभृतिभिर्जयेल्लेखनबृंहणैः ॥ ११८ ॥

(वाग्भटे)

मूर्ध्नि पादयोश्चास्मै शतधौतघृतं शीतांश्च प्रदेहान्दद्यात् । स्नेहोक्तं चाचारमादिशेत् । द्वितीये चाह्नि मार्यं प्रातर्मधुकसर्पिषा कोष्णेन शिरस्तथावबद्धमेव चाक्षि सिञ्चेत् । पश्चादुष्णोदकानुपानं सर्पिः पीत्वा जीर्णे पथ्यमश्नीयात् । तृतीये दिनमे विमुच्य करंजबीजसिद्धेन क्षीरेणाक्षि स्वेदयेत् । लोध्रमधुककिंशुकपटोलद्विहरिद्राकोरण्डमुकुलक्वाथेन मधुमिश्रेणाश्च्योतयेत् । सप्तमेऽहनि सर्वथा मुञ्चेत् । आतपाकाशदर्शनं च परिहरेत् । रागोपे तु नेत्रे मृगशिरोविरेचनश्च । अनुपशान्तरागे सिराविस्रावणम् । सामान्ये नस्यम् । तिलान्सुलिखितान् मधुककाकोलीसुनिषण्णरूपञ्चमूलशर्करामृतशीते पयसि सप्ताहं भावितान् तेनैव पयसा पीडयेत् । मधुकद्राक्षाहारिद्राशारिवानन्तागरुकाकोलीहरेणुकलानालुकचूर्णं च पीड्यमानेषु षोडशभागेन प्रक्षिपेत् । तत्तैलमेभिरेवौषधैः पयसा चाऽष्टगुणेन सिद्धं नावनादश्रुरागघ्नं दृष्टिप्रसादनं च । कृष्णगते तु व्रणे व्रणशुक्लवत् क्रिया । अर्मशेषे च लेखनाञ्जनानि । तत्र सम्यक्छिन्ने वर्णविशुद्धिः स्वस्थता च । हीनच्छेदात्पुनर्वृद्धीरागाश्रुपातप्रकाशादर्शनाक्षिपत्वादि च । अतिच्छेदादक्षिपाकस्तम्भस्फुरणाश्रुतिमिरसंरम्भारितवर्त्मानि । तेषु यथास्वं दोषोद्रेकाद् प्रतिकुर्यात् ।

(संग्रहे)

सितामनश्शिलैलालवणोत्तमनागरम् ।
अर्द्धकर्षोन्मितं तार्क्ष्यं पलार्द्धञ्च मधुद्रुतम् ॥ ११९ ॥

अञ्जनं श्लेष्मतिमिरपिल्लशुक्लार्मशेषजित् ।
त्रिफलैकतमद्रव्यस्वचं पानीयकल्किताम् ॥ १२० ॥

शरावपिहितां दग्ध्वा कपाले चूर्णयेत्ततः ।
पृथक् क्षेपोपधरसैः पृथगेव च भाविता ॥ १२१ ॥

सा मषी शोषिता पेष्या भूयो द्विलवणान्विता ।
त्रीण्येतान्यञ्जनान्याह लेखनानि परं निमिः ॥ १२२ ॥

(वाहटे)

चन्द्रं मधुना घृष्टं लोहितार्मविनाशनम् ॥ १२३ ॥

(वन्ध्या-)

कर्पूरं स्फटिकं वराटमरिचं दार्वी कणा सैन्धवं
तुत्थं पीतकरोहिणी जलधिजं फेनं तथा गैरिकम् ।
तार्क्ष्यं शङ्खमथाञ्जनं च मधुकं सचूर्ण्य सम्यक्कृता
क्षौद्रेणैव रसक्रियेयमखिलानक्ष्यामयान्नाशयेत् ॥ १२४ ।

(क्षार-)

कर्पूरसैन्धवपुराणघृतोपकुल्याः
धात्रीफलोषणकपीतकरोहिणीश्च ।
पिष्ट्वाञ्जनं नयनयोर्मधुनैव दद्यात्
सर्वाक्षिवर्त्मविकृतिप्रशमाय वैद्यः ॥ १२५ ॥

कर्पूराब्दवराटिका त्रिफलिका सिन्धूत्थतुत्थाञ्जनं
तार्क्ष्यं पीतकरोहिणी हिमनिशे पुष्पाह्वपथ्याह्वयम् ।
फेनः केशमषी कटुत्रयगदौ लोध्रं च लौहं रजः
पिष्ट्वैतानि च मातुलुङ्गरसतस्सर्पिर्मधुभ्यां युतम् ॥ १२६ ॥

एतद्धन्ति कुकूणकं सतिमिरं काचं च शुक्रव्रणं
नक्तान्ध्यं क्षतजं च शङ्खनिहितं नाम्ना तु चन्द्रोदयम् ॥ १२७ ॥

(वन्ध्या-)

कर्पूरत्रिफलारसाञ्जनशिलापालाशनिर्यासक
तिक्तातार्क्ष्यजपाण्डुकृष्णवलयन्योपानवचेष्टकम् ।

यष्टीसैन्धवशंखफेनगिरिसृत्ताम्राभ्रपुण्ड्राह्वयं
लोध्रांभोनिधिफेनकं च मधुना दार्वीरसेनाञ्जयेत् ॥ १२८ ॥
(तन्त्रा)-

कर्पूरं स्फटिकं वरा त्रिकटुकं तुत्थं निशायुक् त्रुटी
यष्टी लोध्रसुवर्णटङ्कणशिला मुक्ताप्रवालं मणिः ।
शंखं पीतकरोहिणी वरहिमं कारञ्जबीजं पयः
पिष्टं माक्षिकघृष्टमञ्जनमिदं नेत्रामयान् नाशयेत् ॥ १२९ ॥

कर्पूराञ्जनसीसपारदकणातीक्ष्णानि पिष्ट्वासकृत्
नन्द्यावर्तरसे विशोष्य मधुना पिष्ट्वा पुनर्भाजने ।
शार्ङ्गे स्फाटिक एव सा विनिहितं शुक्लार्मकाचापहं
तैमिर्यं च निराकरोति सहसा नेत्रेऽञ्जितं सर्वदा ॥ १०३ ॥

यन्माणिमन्थशशिपीतकरोहिणीनां
कृष्णारसाञ्जनयुजां क्रमवृद्धचूर्णम् ।
तन्नन्दिवर्तकुसुमस्वरसेन पिष्टं
क्षौद्रद्रुतं हरति वर्त्मगदार्मकाचान् ॥ १३१ ॥

गोदन्तं चन्दनं शङ्खं स्फटिकं सैन्धवं तथा।
मनःशिलां च रजनीं मरिचञ्च प्रपेषयेत् ॥ १३२ ॥

अर्मे च तिमिरे शुक्ले गोदन्तादि प्रशस्यते ॥ १३३ ॥

गोदन्तं कुक्कुटाण्डं करिवरदशनं कूर्मपृष्ठं वराटं
सारंगोद्भूतशृङ्गं जलधिमलमलं* ताम्रशंखं सतुत्थम् ।
कर्पूरं ‡शीतफेनं स्फटिकमपि मधूच्छिष्टमक्ष्णोर्निषिञ्चेत्
शुक्लारुग्मार्गाधिमांसक्षतजमवसिरोत्पातहर्षोन्विहन्ति ॥ १३४ ॥
(राजवैदेहीये)

सिराजाले सिरा यास्तु कठिना लेखनौषधैः ।
न सिध्यन्त्यमवद्यासां पिळकानां च साधनम् ॥ १३५ ॥
(वाहटे)

---

* ताम्रचूर्णमिति पाठान्तरम् । ‡ गर्दभास्थि इति—पा.

क्षतशुक्लशुद्धशुक्लाजकासिराशुक्लयाकात्स्यशुक्लानीति पञ्च कृष्णभागगतरोगाः ।

पित्तं कृष्णेऽथवा दृष्टौ शुक्लं तोदाश्नरागवत् ।
छित्वा त्वचं जनयति तेन स्यात् कृष्णमण्डलम् ॥ १३६ ॥
पक्वजम्बूनिभं किञ्चिन्निम्नं च क्षतशुक्लकम् ।
तत्कृच्छ्रसाध्यं याप्यन्तु द्वितीयपटलव्यधात् ॥ १३७ ॥
तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता ।
तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ॥ १३८ ॥

(शाहे)

निमग्नरूपं तु भवेत्तु कृष्णे
सूच्येव विद्धं प्रतिभाति यद्वै ।
स्रावं स्रवेदुष्णमतीव यच्च
तत् सव्रण शुक्लमुदाहरन्ति ॥ १३९ ॥
सितं यदाभात्यसितप्रदेशे
स्यन्दात्मकं नातिरुगश्रुयुक्तम् ।
विहायसीवाभ्रदलानुकारि
तदव्रणं साध्यतमं वदन्ति ॥ १४० ॥

(पाठ-)

शंखशुक्लं कफात् साध्य
नातिरुक् शुद्धशुक्लकम् ।
आताम्रपिच्छिलास्रसु-
दाताम्रपिटकातिरुक् ॥ १४१ ॥
अजाविट्सदृशोच्छ्राय-
कार्ष्ण्या त्याज्याजका ॥ १४२ ॥

(शाहे)

अजापुरीषप्रतिमो रुजावान्
सलोहितो लोहितपिच्छिलास्रः ।
विदार्य कृष्णं प्रचयोऽभ्युपैति
तच्चाजकं जातमिति व्यवस्येत् ॥ १४३ ॥

(सौश्रुते)

सिराशुक्रं मलैस्सार्वैस्तज्जुष्टं कृष्णमण्डलम् ।
सशोददाहताम्राभिस्सिराभिरवतन्यते ॥ १४४ ॥

अलिपित्तोष्णशीताच्छघनासृग्घ तथ्यजेत् ।
दोषैस्सार्वैस्सर्वैकृष्णं नीयते शुक्ररूपताम् ॥ १४५ ॥

धवलाभ्रोपलिप्ताभं निष्पावार्द्धदलाकृति ।
अतितीव्ररुजारागदाहश्वयथुपीडितम् ॥ १४६ ॥

पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनम् ।
यस्य वा लिङ्गनाशोन्तः श्यावं यद्वा सलोहितम् ॥ १४७ ॥

अत्युत्सेधावगाढं वा सास्रनाडीव्रणावृतम् ।
पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम् ॥ १४८ ॥

(वाग्भटे)

दृष्टेः समीपे तु भवेत्तु यच्च
न चावगाढं न च संस्रवेद्धि ।
अवेदनावच्च युग्मशुक्रं
तत्सिद्धिमाप्नोति कदाचिदेव ॥ १४९ ॥

(पाठ)

अजका शुद्धशुक्रं च व्रणशुक्लं त्रयं तथा ।
एतच्छिन्नं स्मृतं साध्यं छिच्छिन्नं याप्यमुच्यते ॥ १५० ॥

(तन्त्रा०)

शुक्लकेषु यथास्वं दोषानुसारेण त्रिफलाघृतपानरक्तमोक्षणविरेचनाश्च्योतनमुखालेपनस्यतर्पणपुटपाकान् प्रयुञ्जीत । तत्र व्रणशुक्ले स्निग्धैर्बृंहेण त्रिविधकं सर्पिः पाययेत् सिराञ्च विध्येत् दुष्टशेषञ्च पिण्डितमक्षिगमसृग्जलौकाभिरपहरेत् । मधुककाकोलीमृद्वीकोत्पलविदारीकाथेन मञ्जिष्ठाक्षीरकाकोलीमधुककथितजक्षीरेण वा सशर्करेणाश्च्योतयेत् । शीतैश्चास्य शिरोमक्त्रं दिद्यात् सिञ्चेत्।

(समदे)

दोषानुरोधात् शुक्लेषु स्निग्धा रूक्षा नरा घृतम् ।
तिक्तमूर्ध्वमसृक्स्रावो रेकस्सेकादि चेष्यते ॥ १५१ ॥

१ धवत्र कृष्णमिति मुद्रिताष्टाङ्गहृदयपाठ ।

त्रिवृद्दारिणा पक्वं क्षतशुक्ले घृतं पिबेत् ।
सिद्धेनोत्पलकाकोलीद्राक्षायष्टिविदारिभिः ।
ससितेनाजपयसा सेचनं सलिलेन वा ॥ १५२ ॥

(वाग्भटः)

निम्नं तु शुक्लं सरुजमुन्नमयेत् स्नेहपाननस्यजांगलरसैः । नीरुजं तर्पणपुटपाकाभ्याम् । तत्र तर्पणं मृगविष्किरपिशितं काश्मर्यसुनिषण्णकोत्पलमृणालशृङ्गाटककशेरुद्राक्षाक्षीरविदारीजीवनीयांश्च क्षीरेण पाचयेत् । तस्मान्नवनीतमुद्धृत्य चन्दनमधुशर्करानन्तानीलोत्पलकल्कैरष्टगुणेन पयसा विपक्वं पूर्ववद्योजयेत् । पुटपाकं च कुक्कुटमुद्धृतान्त्रं वेशवारीकृत्य चन्दनशारिवामधुकशर्करानन्तानीलोत्पलपद्मपौण्डरीकजीवनीयकल्कैः समधुघृतैस्संसृज्य प्रागिव कल्पयेत् । द्वित्वक्छिन्नमेवं यापयेत् ।

((सङ्ग्रहे)

क्षीरेण यष्टीमधुकं क्वथितं शर्करायुतम् ।
अक्षिरोगेषु सर्वेषु परिषेकः प्रशस्यते ॥ १५३ ॥
तण्डुलीयकमूलेन क्षीरे सर्पिर्विपाचितम् ।
अक्षिरोगेषु सर्वेषु प्रशस्तं तर्पणं भवेत् ॥ १५४ ॥

(हारीतः)

घननादशिफायष्टीमृणालोत्पलचन्दनैः ।
ससितैः कल्कितैः पक्वं सर्पिः क्षीरे चतुर्गुणे ॥ १५५ ॥
अभिष्यन्दमधीमन्थमक्षिपाकं निहन्ति तत् ।
अजकां व्रणशुक्लं च सेकाश्च्योतनतर्पणैः ॥ १५६ ॥
तण्डुलीयकपल्लूरनन्द्यावर्तं च तालजम् ।
हंसपादी च शुक्तिश्च दार्वी चिंचाप्रसूनकम् ॥ १५७ ॥
एतेषां स्वरसमस्थं यसदगृञ्जनाचथा ।
स्तन्यं गोक्षीरसंयुक्तं घृतप्रस्थं विपाचयेत् ॥ १५८ ॥
सारिवा चन्दनं यष्टी मृणालोत्पलसैन्धवम् ।
कशेरुघननादं च तुल्यं स्यात् शर्करान्वितम् ॥ १५९ ॥
तर्पणाश्च्योतने कुर्यात् रागसावरुजापहम् ।
अजकं व्रणशुक्लं च अभिष्यन्दं च नाशयेत् ॥ १६० ॥

मत्स्याक्षीस्वरसे सिद्धं घृतं क्षीरचतुर्गुणम् ।
चन्दनोत्पलयष्ट्याह्वपत्तूरं तण्डुलीयकम् ॥ १६१ ॥
कल्कीकृत्य ततो योज्यं तर्पणाद्यैर्व्रणेषु च ।
अभिष्यन्देऽधिमन्थे च रागशोफाजकासु च ॥ १६२ ॥
(योग-)

तटाकशुक्तिसारश्च स्वन्यदुग्धं च तालजम् ।
नन्द्यावर्तप्रसूनाच्च शिग्रुपल्लवतो रसम् ॥ १६३ ॥
क्षीरोत्थितं च सर्पिश्च पृथक् कुडुवमावपेत् ।
दार्वीचन्दनयष्टीभिः कर्षांशैर्विपचेत् घृतम् ॥ १६४ ॥
व्रणशुक्लमभिष्यन्दमास्रावं रक्तसंभवम् ।
तर्पणेन जयेत् सर्वान् नेत्ररोगान् न संशयः ॥
विदेहाधिपतिप्रोक्तं पञ्चामृतमिदं घृतम् ॥ १६५ ॥
(वृन्द-)

अनन्तया चन्दनेन सितया मधुकेन च ।
उत्पलैश्च मृणालैश्च विदार्याश्च कशेरुकैः ॥ १६६ ॥
आजेन पयसा पिष्ट्वा सर्पिराजं विपाचयेत् ।
नस्येऽक्षिण तर्पणे देयं परिषेके विशेषतः ॥ १६७ ॥
तिमिरे काचरोगे च नेत्रशूले तथैव च ।
अभिष्यन्देऽधिमन्थे च व्रणशुक्ले च पूजितम् ॥ १६८ ॥
अनन्ताद्यमिदं सर्पिः सर्वनेत्रामयापहम् ॥ १६९ ॥
(तन्त्रान्तरे)

नीलोत्पलं समधुकं चन्दनं जीवरावुभौ ।
प्रपुण्डरीकं लोध्रं च मृणालं रक्तमुत्पलम् ॥ ॥ १७० ॥
कशेरुकं च कुमुदं वल्मूलं सुगन्धिका ।
इन्दीवरं च तत्सर्वं पिष्ट्वा शीते पचेद् घृतम् ॥ १७१ ॥
दग्धादुन्मथ्य सञ्जातं तन्निहद् तर्पणादिभिः ।
व्रणशुक्लाभिकास्यन्दरक्ताभारासिशूलजित् ॥ १७२ ॥
नीलोत्पलादिकमिदं विदेहाधिपनिर्मितम् ।

मधुना तालवृन्तस्य स्वरसश्शुक्लनुत् परम् ॥ १७३ ॥
यक्षाक्षिपत्रस्वरसः शिग्रुपत्ररसः पृथक् ।
नन्द्यावर्तप्रवालस्य स्वरसो मधुना हितः ॥ १७४ ॥

(योग)

अव्रणरागरुजाशान्तिं यदा यस्योपलक्षयेत् ।
तदा तदञ्जनैश्शुक्रं लेखनीयैरुपाचरेत् ॥ १७५ ॥

वैडूर्यस्फटिकशङ्खमुक्ताविद्रुमरूप्यायसत्रपुताम्रसीसालमनश्शिलाकुक्कुटाण्डत्वक्समुद्रफेनरसाञ्जनसैन्धवैरजापयःपिष्टैर्वर्तयश्छायाशुष्काः क्षौद्रघृष्टाः प्रातस्सायं च प्रयुक्ता व्रणशुक्लनुदः ।

(सुश्रुते)

वर्तयो जातिमुकुललाक्षागैरिकचन्दनैः ।
प्रसादयन्ति पित्तास्रं घ्नन्ति च क्षतशुक्लकम् ॥ १७६ ॥
दन्तैर्दन्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः ।
सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः ॥ १७७ ॥
क्षतशुक्लमपि व्यापि दन्तवर्तिर्निरस्यति ।
तमालपत्रं गोदन्तं शंखं फेनोऽस्थि गार्दभम् ॥ १७८ ॥
ताम्रञ्च वर्तिर्मूत्रेण सर्वशुक्लविनाशनी ।
रसानि दन्ताः शृङ्गाणि धातवस्त्र्यूषणं त्रुटी ॥ १७९ ॥
करञ्जबीजं लशुनो व्रणसादि च भेषजम् ।
सव्रणाव्रणगम्भीरत्वक्स्थशुक्लघ्नमञ्जनम् ॥ १८० ॥
शुद्धशुक्ले निशायष्टीक्षारिवाशाबराम्भसा ।
सेचयेल्लोध्रपोट्टल्या कोष्णाम्भोमग्नयाथवा ॥ १८१ ॥
बृहतीमूलयष्ट्याह्वताम्रसैन्धवनागरैः ।
धात्रीफलाम्बुना पिष्टैर्लेपितं ताम्रभाजनम् ॥ १८२ ॥
यवाज्यामलकीपत्रैर्बहुशो धूपयेत्ततः ।
तत्र कुर्वीत गुलिकास्ता जलक्षौद्रपेषिताः ॥ १८३ ॥
महानीला इति ख्याताः शुद्धशुक्लहराः परम् ॥ १८४ ॥

(वाग्भटे)

अशाम्यति तु शुक्ले सर्वत्र पुनः पुनर्यथोक्तमेव पर्यायेण

स्वेदोपनाहे प्रणीता वेदनामपनयति शुक्लश्चोत्सादयति। तद्वदानूपमांसवेशवारो वसापयःसर्पिर्विमिश्रः सिद्धः। अथैवमुपनाहमचलितस्याञ्जनम्। (संग्रहे)

उत्सन्नं वा सशल्यं वा शुक्लं वालादिभिर्लिखेत् ॥ १९३ ॥ (वाग्भटे)

ताप्यं मधुकसारो वा बीजं वाऽक्षस्य सैन्धवम्।
मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्लशान्तये ॥ १९४ ॥
स्फटिकोपणयष्ट्याह्वशंखगोदन्तसैन्धवैः।
सशिलाचन्दनैर्वर्तिः शुक्लघ्नी शिग्रुवारिणा ॥ १९५ ॥
समुद्रफेनदक्षांडत्वक्सिन्धूत्थैः सशंखकैः।
शिग्रुबीजयुतैर्वर्तिः शुक्लादीनञ्जयल्लिखेत् ॥ १९६ ॥
दक्षाण्डत्वक्शिलाशंखकाचसैन्धवचन्दनैः।
तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविनाशनः ॥ १९७ ॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम्।
क्रमवृद्धमिदं चूर्णं शुक्लार्मादिविलेखनम् ॥ १९८ ॥

तुरङ्गपृथुकामूलं ताम्रं च परिपेचयेत्।
धान्याम्लेन कृता वर्तिस्त्रेणशुक्लविनाशनी ॥ १९९ ॥ (सिद्ध०)

गुलिकारनालकलितपञ्चमशुल्वांशहंसपादिकृता।
पणत्रतिं नेत्ररुजां प्रणुदत्यचिरेण सिद्धार्था ॥ २०० ॥
श्वेतपूलासतुलसी दुर्गन्धी हंसपादिका।
पादप्रमाणताम्राः स्युः सर्वनेत्ररुजापहाः ॥ २०१ ॥
तत्पञ्चश्वेतकांबोजमूलं च समभागिकम्।
चिञ्चापुष्परसैः पिष्टा वर्तिः स्यात्सत्रणार्मजित् ॥ २०२ ॥
ताम्राहितारररसपीतकरोहिणीन्दु-
शौण्डीरसांजननदीजपुराणकांस्यैः।
वर्तिः कृता सकलसंमितहंसपादी-
मूलैर्निहन्ति नयनामयजालमाशु ॥ २०३ ॥

त्रिनिष्कं श्वेतपलाससमूल तुत्थञ्च निष्ककम् ।
प्रलचिञ्चाफल निष्कं निष्क हंसपदीजटा ॥ २०४ ॥
तिन्त्रिणीपुष्पसारेण पिष्ट्वा सप्तदिनं ततः ।
वर्तिः कृताञ्जिता स्तन्यैः स्यन्दार्मव्रणशुक्रजित् ॥ २०५ ॥

श्वेतपलासमूलत्वक्त्रिभागं तुत्थमेककम् ॥
तिन्त्रिणीपुष्पसारेण पिष्ट सप्तदिनं ततः ।
स्तन्येन घृष्टा गुलिका सर्वनेत्रामयापहा ॥ २०६ ॥
(तन्त्रान्तरे)

विपचेत् पद्भ्यः दार्व्या क्वाङ्के काञ्चिकस्य तु ।
तेन चार्धावशिष्टेन श्वेतदुर्वान्त्रिकाटा ॥ २०७ ॥
दशनिष्कामित निष्कद्वय ताम्र च पेषयेत् ।
यावत्काञ्चिकमेट(?) स्याद्वर्तिः सर्वाक्षिरोगजित् ॥ २०८ ॥
तनूनि ताम्रपत्राणि चाङ्गेरीस्वरसे क्षिपेत् ।
सप्तरात्र धान्यराशौ स्थापयेत्तत उद्धृतात् ॥ २०९ ॥
तस्मादेकत्रयो यष्ट्या भागा ग्राह्यास्त्रयस्तथा ।
पृथ्वीकामूलतः पिष्ट्वा काञ्चिकेनाथ तन्मुहुः ।
छायाविशुष्का गुलिका स्यन्दार्मव्रणशुक्रजित् ॥ २१० ॥

स्फटिकगैरिकाम्रजोञ्जनं
रसक गरजश्च स्थेयम् (?) ।
गुनिदिनं विनितागयसा सम
जयति पिष्टपुटुम्बरलेपितम् ॥ २११ ॥
छायाविशुष्क गुलिकीकृतं त-
दश्यामयान्योरतरानलेपान् ।
मदारक्तव्रणशुक्रशूलं
पिल्लावसाम्बुसुतिमाशुरूग्ाम् ॥ २१२ ॥
(सिद्धयोग)

गिगगुकरे त्वर्धाग्न चिकित्सा व्रणशुक्रवत् ॥ २१३ ॥
(वाग्भट)

अप्रशान्तमेवमर्मवत्साधयेत् । समाक्षिकं तु रसाञ्जनं प्रतिसारणम् । सप्तमे दिवसे कुक्कुटाण्डकपालस्फटिकचन्दनमनःशिलाशैलेरश्ववराहदशनैश्च वर्ति कृत्वाऽञ्जयेत् । उदधिकफशंखचन्दनैः अजापयःपिष्टैर्वर्तिर्मधुघृष्टा प्रत्यञ्जनं सिराशुक्लजित् । अनुपशमे पश्यति चातुरे किञ्चिदिष्टमेवासकृत् कुर्वीत ।

अजकामदृष्ट्युपघातिनीं कृष्णान्तजामसाविस्रावणैर्मधुरविरेचनैः क्षीरवस्तिभिश्च साधयेत् । सिराशुक्लवच्च शस्त्रकर्मादिविधिनेति ।

(संग्रह)

अशान्तावर्मवच्छस्त्रमजकाख्ये च योजयेत् ॥ २१४ ॥

(पाहटे)

व्रणशुक्लाक्षिपाकाभ्यां कृष्णं भित्त्वा तु याऽजका ।
जायते दृष्टिदूरस्था तस्यास्त्वेषा क्रिया हिता ॥ २१५ ॥

(कृष्णा)

तटाकशुक्तिमाहृत्य स्थापयेदेकवासरम् ।
रिक्ते पात्रे ततस्तस्या मांससारं मधुप्लुतम् ।
आश्च्योतयेत्ततो नश्येदजकाव्रणशुक्लकम् ॥ २१६ ॥

(तन्त्रा॰)

तटाकशुक्तिजं मांसं स्तन्येन परिपेचयेत् ।
सघृतं लेपितं नेत्रे व्रणशुक्लाजकापहम् ॥ २१७ ॥

तटाकशुक्तिजे सारे सक्षीरं निपचेद् घृतम् ।
कटिकवीर्यष्टिमधुकतण्डुलीयकचन्दनैः ॥ २१८ ॥

तर्पणात् परिषेकाच्च व्रणशुक्लाजकापहम् ।
कुक्कुटाण्डकपालं च फेनकं शिग्रुबीजकम् ॥ २१९ ॥

समुद्रजिह्वा वैदेही सैन्धवं मरिचं तथा ।
जातीपुष्पश्च तत्सर्वं पेषयेच्छिग्रुवारिणा ॥
छायाशुष्का कृता वर्तिरजकां नाशयेद् ध्रुवम् ॥ २२० ॥

तटाकशुक्तिं घननादमूलं विपाचयेत्पंचपटं पृथक् तु ।
क्षीरस्य कंसे तु तदर्धशिष्टे निर्मथ्य जातं नवनीतमत्र ॥२२१॥

संगृह्य चाक्ष्णोरुपरि प्रक्षिपेत् सिद्धं घृतं वा पयसैव ताभ्याम् ।
निहन्ति दाहाश्रुविमोक्षणाक्षिसिराजकादिव्रणशुक्लपीडाः ॥ २२२ ॥
(तन्त्रान्तरे)

-समधुकसितकेतकाग्रस्वरस इहासाध्यमजकादिम् ॥ २२३ ॥
(काशी॰)

अजकायामसाध्यायां शुक्लेऽन्यत्र च तद्विधैः ।
वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः ॥ २२४ ॥
कुर्यात् बीभत्सतां जेतुं शुक्लस्योत्सेधसाधनम् ।
नारिकेलास्थिभल्लातकतालवंशकरीरजम् ॥ २२५ ॥
भस्माद्भिः स्रावयेत्ताभिर्भावयेत्करभास्थिजम् ।
चूर्णं शुक्लेष्वसाध्येषु तद्वर्ण्यप्रमञ्जनम् ॥ २२६ ॥
साध्येषु साधनायालमिदमेव च शीलितम् ।
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ॥ २२७ ॥
समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानुपूरयेत् ।
व्रणं गोमांसचूर्णेन बद्ध्वं बद्ध्वं विमुच्य च ॥ २२८ ॥
सप्तरात्राद्व्रणे रूढे कृष्णभागे समे स्थिरे ।
स्नेहाञ्जनश्च कर्तव्यं नस्यं च क्षीरसर्पिषा ॥ २२९ ॥
तथापि पुनराध्माते भेदच्छेदादिकां क्रियाम् ।
युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम् ॥ २३० ॥
(वाहटे)

ताम्रस्य षोडशांशाः स्युर्मधुकस्य चतुर्दश ।
कुष्ठस्य द्वादशांशाः स्युर्वचायाश्च दशैव तु ॥ २३१ ॥
सैन्धवस्याष्टभागास्तु पिप्पल्याश्च षडेव तु ।
रजतस्य [illegible] चत्वारो द्वौ भागौ कनकस्य च ॥ २३२ ॥
अजाक्षीरेण सप्ताहं पिष्ट्वा ताम्रे प्रलेपयेत् ।
बदरास्थिप्रमाणेन गुटिकां कारयेद् भिषक् ॥ २३३ ॥
अभिष्यन्दमधीमन्थं व्रणशुक्लं कुकूणकम् ॥ २३४ ॥
तिमिरं पटलं काचं हन्ति कष्टं विशेषतः ।
द्विरष्टौ ताम्ररजसो मधुकस्य चतुर्दश ॥ २३५ ॥

कुष्ठस्य द्वादशांशाः स्युः वचायाश्च दशैव तु ।
सैन्धवस्याष्टभागाश्च पिप्पल्याश्च षडेव तु ॥ २३६ ॥
अजाक्षीरेण संपिष्य ताम्रपात्रे प्रलेपयेत् ।
ताम्रादिगुलिका नाम्ना विदेहाधिपकीर्त्तिता ॥ २३७ ॥
अभिष्यन्दमधीमन्थं व्रणशुक्लं कुकूणकम् ।
तिमिरं पटलं काचं हन्ति पिल्लं विशेषतः ॥ २३८ ॥
चन्दनगैरिकलाक्षाजातीमुकुलानि चाम्बुपिष्टानि ।
व्रणशुक्लघ्नी वर्त्तिः प्रसादनी सर्वतिमिरघ्नी ॥ २३९ ॥
दार्वी वरा मधुकमम्भसि नालिकेरे
पक्त्वाऽष्टभागपरिशिष्टरसं पुनस्तत् ।
सान्द्रं विपाच्य क्षिप्तसैन्धवमाक्षिकाढ्यं
युञ्ज्याद् व्रणार्मतिमिरादिषु पिच्चटेषु ॥ २४० ॥
(वृद्धहारीते)

फलत्रयं दारुनिशां पलांशं पाचयेज्जले ।
प्रस्थे तु नालिकेरस्य अष्टभागावशेषिते ॥ २४१ ॥
पेषयित्वा क्षिपेत्तत्र तार्क्ष्यं पीतकरोहिणीम् ।
रसाञ्जनं गैरिकञ्च कर्पूरं चन्दनं तथा ॥ २४२ ॥
कतकं पिप्पलीश्चैव अर्द्धकर्षन्तु पेषयेत् ।
मधुना सह संयोज्य सर्वनेत्रामयापहम् ॥ २४३ ॥
अर्मश्च पिचकोपश्च रागकण्डू च नाशयेत् ॥ २४४ ॥
(तन्त्रान्तरे)

इति संध्यादिरोगचिकित्सा ।

---

वातपित्तकफैस्संसर्गेण सन्निपातेन रक्तेन च षट् तिमिराणि । काचाश्च षट् । षट् च लिङ्गनाशाः तथा गम्भीरदृष्टिः पित्तविदग्धाख्यास्तथा नकुलान्धो नक्तान्ध उष्णविदग्धा अम्लविदग्धा धूमरः औपसर्गिकलिङ्गनाश इति द्वात्रिंशद्रोगाः सप्तविंशतिः ॥

सिरानुसारिणि मले प्रथमं पटलं श्रिते ।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ १६ ॥

प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।
भूतन्तु यत्नादासन्नं दूरे सूक्ष्मं च नेक्षते ॥ २४६ ॥
दूरान्तिकस्थं रूपञ्च विपर्यासेन मन्यते ।
दोषे मण्डलसंस्थाने मण्डलानीव पश्यति ॥ २४७ ॥
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते ।
दृष्टेरभ्यन्तरगते ह्रस्ववृद्धविपर्ययम् ॥ २४८ ॥
नान्तिकस्थमधस्संस्थे दूरगं नोपरिस्थिते ।
पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः ॥ २४९ ॥
प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।
तेनोर्ध्वं वीक्षते नाधस्तनुचेलावृतोपमम् ॥ २५० ॥
यथावर्णं च रज्येत दृष्टिर्हीयेत च क्रमात् ।
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ २५१ ॥
लिङ्गनाशं मलः कुर्वञ्छादयेद् दृष्टिमण्डलम् ॥ २५२ ॥

(वाहटे)

तत्र वातजे तिमिरे चलाविलारुणाभासं प्रसन्नं च मुहुरीक्षते । जालमशकादींश्च पश्यति । तस्मिन् काचीभूते दृष्टिररुणा स्यात् । स आस्यमनासिकं पश्यति । चन्द्रदीपाद्यनेकत्वं च । तस्मिन् प्रवृद्धे लिङ्गनाशभूते रजोधूमावृते च दृष्टिः स्फटिकारुणाभा हतदर्शना च । तत्रैव लिङ्गनाशे वातेन दृक्सिरासङ्कोचात् दृङ्मण्डलमन्तर्विशत्यसौ गम्भीरा नाम । पित्तजे तिमिरे विद्युत्खद्योतादिदीपितं नीलं च पश्यति । काचे तु काचनीलाभा दृष्टिरर्कपरिवेषादि ध्वंसद्रूपं च पश्यति । लिङ्गनाशे भृङ्गनीला निरालोका च दृक् स्यात् । तत्रैव पित्तात् दूरदर्शिनी ह्रस्वा च दृष्टिर्ह्रस्वाख्या । तत्रैव पीतापीताभदर्शना दृष्टिः पित्तविदग्धाख्या । कफेन तिमिरे स्निग्धं श्वेतं शङ्खकुन्दाद्याचितमिव रूपं पश्यति । काचे तु सिताभा दृष्टिः निष्प्रभेन्द्वर्काचितमिव पश्यति । तस्मिन् लिङ्गनाशभूते मूर्तो दृष्टिगतः कफः स्निग्धो दर्शननाशनः पद्मपत्रस्थजलबिन्दुरिव चलो लक्ष्यते । स उष्णे संकुचितः छायायां विसर्पी च शङ्खकुन्दाद्याभशुक्लिमा च स्यात् । रक्तजे तिमिरे रक्ताभमीक्षते । काचे तु रक्ता कृष्णा वा दृक् स्यात् ।

तादृगेव च पश्यति । लिङ्गनाशेऽपि तथैव दृष्टिः स्यात् निष्प्रभा हतदर्शना च । संसर्गसन्निपातेषु संसृष्टलिङ्गान् तिमिरादीन् विद्यात् ।

द्योतते नकुलस्येव यस्य दृङ् निचिता मलैः ।
नकुलान्ध्यः स तत्राह्नि चित्रं पश्यति नो निशि ॥ २५३ ॥

दोषा दृशं स्थगयन्ति । दिवार्ककरस्पृष्टा विलीना लीनाः स्युः । तेनाऽह्नि सुखमीक्षते । रात्र्यान्धः । स रोगो नक्तान्धः । उष्णतप्तस्य सद्यश्शीतजलावगाहादूष्मा त्रिदोषरक्तसंयुक्तो नेत्रं याति । तेन शुक्लभागमालिन्यमहन्यामिलदर्शनं रात्र्यान्ध्यं दाहश्च स्यात् । सा दृष्टिरुष्णविदग्धाख्या । अम्लाशनात् सार्द्रदोषैस्साकण्डूक्लेदा दृगम्लविदग्धाख्या । शोकज्वरातितप्तस्य वाताद्यो धूमाविलां धूमदर्शनीं दृशं कुर्युस्स धूमराख्यः । योल्पसत्वः सहसा रूपमद्भुतं भास्वरं वा पश्यति तस्य क्षुद्रा वाताद्या नयनं गतास्तेजस्संशोष्य दृष्टिं नष्टदर्शनां वैडूर्यवर्णामन्यथां कुर्युः । स लिङ्गनाशः औपसर्गिकाख्यः । तत्र वर्जयेत् विना कफाल्लिङ्गनाशान् गम्भीरां ह्रस्वजामपि । षट् काचा नकुलान्ध्यश्च याप्याः । शेषांस्तु साधयेत् ।

द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥

तिमिरं काचतां याति काचोप्यान्ध्यमुपेक्षया ।
नेत्ररोगेष्वतो घोरं तिमिरं साधयेद्द्रुतम् ॥ २५४ ॥

(वाहटे)

चित्रकमूलत्रिफलापटोलयवसाधितं पिबेदम्बु ।
सघृतं निशि चक्षुष्यं तिमिरं च विशेषतो हन्ति ॥ २५५ ॥

(भिषक्सुष्टौ)

सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ २५६ ॥

(वाहटे)

सदानलिप्तास्त्रिफलां विचूर्णितां
घृतप्रगाढां तिमिरेथ पित्तजे ।
समीरजे तैलयुतां कफात्मके
मधुप्रगाढां विदधीत युक्तितः ॥ २५७ ॥

(सुश्रुतात्)

मर्वा शकृत्कार्थविपक्कमुत्तमं
हितं तु तैलं तिमिरेषु नावनम् ।
हितं घृतं केवलमेव पैत्तिके
ह्यजाविकं यन्मधुरैर्विपाचितम् ॥ २५८ ॥

(पाहसु )

शुक्लैरण्डान्मूलमथोग्रां शतपुष्पां
पुष्पोद्भूतं यच्च बृहत्यास्तगरञ्च ।
पक्व तैल तैस्सपयस्कैस्तिमिरघ्न
नस्यश्रेष्ठं व्याधिषु चोर्ध्वेष्वपरेषु ॥ २५९ ॥

(योगशतके चाहटे च)

तिलतैलमक्षतैलं भृंगस्वरसोऽसनाच निर्यूहः ।
आयसपात्रनिपक्व करोति दृष्टेर्बलं नस्यम् ॥ २६० ॥

(वाहटे चक्रदे च)

तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषितै ।
तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ २६१ ॥
प्रपौण्डरीककाकोलीपिप्पलीलोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुकलत्रयैः ॥ २६२ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।
द्राक्षाचन्दनमञ्जिष्ठाकाकोलीद्वयसैन्धवैः ॥ २६३ ॥
सिताशतावरीमेदापुण्ड्राह्वमधुकोत्पलैः ।
पचेज्जीर्णघृतप्रस्थं रामक्षीरं पिचून्मितैः ॥ २६४ ॥
हन्ति तच्छुक्लतिमिररक्तराजीशिरोरुजः ।
पटोलनिम्बकटुकादार्वीसेव्यवरावृषम् ॥ २६५ ॥
सधन्वयासत्रायन्तीपर्पटं पालिकं पृथक् ।
प्रस्थमामलकानां च क्वाथयेदर्मणेऽम्भमः ॥ २६६ ॥
तदाढके द्विपलिकैः पिष्टैः प्रस्थं घृतात्पचेत् ।
मुस्ताभूनिम्बयष्ट्याह्वकुटजोदीच्यचन्दनैः ॥ २६७ ॥

सव्योपचव्यैस्तत्सर्पिर्घ्राणकर्णाक्षिरोगजित् ।
विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठजित् ॥ २६८ ॥
विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णविदाहजित् ।
त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ॥ २६९ ॥
तेन तुल्यपयस्केन त्रिपलापलकल्कवान् ।
अर्द्धप्रस्थो घृतात् सिद्धः सितया माक्षिकेण वा ॥ २७० ॥
युक्तं पिबेत्तत् तिमिरी चक्षुष्यं वा वरारसम् ।
यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ २७१ ॥
पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत् समैः ।
अजाक्षीरवराधात्रीमार्कवस्वरसैः पृथक् ॥ २७२ ॥
महात्रैफलमित्येतत् परं दृष्टिविकारजित् ॥ २७३ ॥

(वाग्भटे)

त्रिफलाक्वाथकल्केन सपयस्कं भृतं घृतम् ।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ २७४ ॥

(सिद्धसारे.)

त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ।
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम् ॥ २७५ ॥
मासमेकं हिताहारः पिबन्नामलकोदकम् ।
सौपर्णं लभते चक्षुरित्याह भगवान्निमिः ॥ २७६ ॥
प्रातर्भक्तस्य वा पूर्वमद्यात् पथ्यां पृथक् पृथक् ।
मृद्वीकाशर्कराक्षौद्रैः सततं तिमिरातुरः ॥ २७७ ॥
मांसीत्रिजातकायःकुङ्कुमनीलोत्पलाभयातुत्थैः
सितकाचशङ्खफेनकमरिचाञ्जनपिप्पलीमधुकैः ॥ २७८ ॥
चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद्युगलमक्ष्णोः ।
तिमिरार्मरक्तराजीकण्डूकाचादिशममिच्छन् ॥ २७९ ॥
मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम् ।
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित् ॥ २८० ॥
निर्दग्धं बदराङ्गारैस्तुत्थं चैत्थं निषेचितम् ॥ २८१ ॥

क्रमादजापयःसर्पिःक्षौद्रे तस्मात्पलद्वयम् ।
कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ॥ २८२ ॥
पट्टलोध्रनिशापथ्याकणैलाञ्जनफेनकैः ।
युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम् ॥ २८३ ॥
हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः ।
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ॥ २८४ ॥

गोमूत्रे छगणरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत् कुर्याद् गरुडसमं नरस्य चक्षुः ॥ २८५ ॥

श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः ।
यष्टीरसं च यत् सीसं सप्तकृत्वः पृथक् पृथक् ॥ २८६ ॥

तप्तं तप्तं पायितं तच्छलाका
नेत्रे युक्ता साञ्जनाऽनञ्जना वा ।
तैमिर्यार्मस्रावपैच्छिल्यपैल्ल
कण्डूं जाड्यं रक्तराजीं च हन्ति ॥ २८७ ॥

रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् ।
ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥ २८८ ॥

मरिचानि दशार्धपिचु-
स्ताप्यात्तुत्थात्पले पिचुर्यष्ट्याः ।
क्षीरार्द्रदग्धमञ्जन-
मपतिसारास्यमुत्तमं तिमिरे ॥ २८९ ॥

अक्षबीजमरिचामलकत्वक्-
तुत्थयष्टिमधुकैः जलपिष्टैः ।
छाययैव गुटिकाः परिशुष्का
नाशयन्ति तिमिराण्यचिरेण ॥ २९० ॥

मरिचामलकजलोद्भवतुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः ।
षण्माक्षिक इति योगस्तिमिरार्मक्लेदकाचकण्डूहन्ता ॥ २९१

कृष्णां सर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान्।
क्षीरकुम्भे त्रिसप्ताहं क्लेदयित्वा प्रमन्थयेत् ॥ २९२ ॥

तत्र यन्नवनीतं स्यात् पुष्पीयाञ्चेन कुक्कुटम्।
अन्धस्तस्य पुरीषेण प्रेक्षते ध्रुवमञ्जनात् ॥ २९३ ॥

कृष्णसर्पवसा शङ्खः कतकात्फलमञ्जनम्।
रसक्रियेयमचिरादन्धानां दर्शनप्रदा ॥ २९४ ॥

(३३1b)

मनोह्वा सैन्धवं व्योषं शङ्खनाभीरसाञ्जनम्।
कतकं चन्दनं फेनो निकुम्भानि सितोपला ॥ २९५ ॥

कुक्कुटाण्डकपालं च जलपिष्टा सुखावती।
हन्त्येषा मधुना घृष्टा काचतैमिर्यशुक्लकान् ॥ २९६ ॥

(वृन्द)

मधुकमरिचपिप्पली सलोध्रा
तगरजनी त्रिफला हिमाम्बुपिष्टा।
तिमिरपटलकाचकण्डुहन्त्री
विमलकरी विमलेति विश्रुता सा ॥ २९७ ॥

(शार्ङ्गधर)

कृपणमेकं पिष्ट्वा दद्यात्कन्याश पुष्पाणि।
तिमिरेऽञ्जयेदथैकं मरिचाढ्यं द्रोणपुष्पि पुष्पिरतम्(?)॥२९८॥

(सिद्धयोग)

मरिचामलकैः फलम्भवीजैः
क्रमवृद्धोत्तरभृङ्गतोयपिष्टैः।
तिमिरं पटलं निहन्ति काचं
सुकृतं कर्म यथाकृतं कृतघ्ने ॥ २९९ ॥

(ग्रन्थान्तरे)

लिकुचपक्कफलोदकसंस्थितं
मरिचमर्ककरैरथ शोषितम्।
द्रपदि वारिनिघृष्टमिदं नृणा
तिमिरकाचनिशान्ध्यजिदञ्जनात् ॥ ३०० ॥

(कुप्रचिद

नीलोत्पलपत्रशतं मुद्गशतं यवशतं च निस्तुषकम् ।
मालत्याः कुसुमशतं पिप्पल्याः तण्डुलशतं च पञ्चशती ॥२०१॥
एषा वर्तिर्लिखिता यवनैः (कुहचन) शिलास्तम्भे ।
चन्द्यमनन्धं कुरुते यस्य च नोत्पाटिते नेत्रे ॥ २०२ ॥
शतमुत्पलपत्राणां मुद्गानां तावदेव च ।
पिप्पलीतण्डुलशतमेभिः सौवीरकं समम् ॥ २०३ ॥
एतच्छ्लक्ष्णीकृतं चूर्णं वृद्धानां तिमिरापहम् ।
अशीतितिलपुष्पाणि मरिचानि च षोडश ॥ २०४ ॥
पञ्चाशज्जातिपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
इयं चन्द्रप्रभा नाम वर्तिस्तिमिरनाशिनी ।
क्लेदकण्डूप्रशमनी मलकाचविनाशिनी ॥ २०५ ॥

(एतद्‌ ग्रंथं चन्द्रहास)

चिंचादलस्वरसपिष्टमुकुन्दिबीजं
कंसे मलिप्य परिशोष्य सदातपेन ।
तैलं ततः सुतमिदं शशिपादभागं
योज्यं दृशांतिमिरे तिलमात्रमक्ष्णि ॥ २०६ ॥

शशिटङ्कणदन्तगोपन-
फणालिकारचूर्णवृद्धमक्षिसलिले ।
पिष्टं कारयनिघृष्टं
तिमिरार्जुनकाचपटलानाम् ॥ २०७ ॥

नागपारदधात्रीन्द्रयवनाज्यकणमंन्यवैः ।
रसाञ्जनसिताधौतैर्योगो नेत्रामयापहः ॥ २०८ ॥

मशिकणमरिचकपालं
पिष्ट्वा भृङ्गासवेन सक्षौद्रम् ।
मुनिदिनकांस्यनिघृष्टं
तिमिरार्जुनपटलकाचघ्नम् ॥ ३१० ॥

वेदाग्निभूतवसुधातुरसाश्च सिन्धु-
कृष्णोग्रताम्रमधुकाह्वयकुम्भभागाः ।
शुल्वोपिताजपयसा मुनिवासरपिष्टाः
स्यन्दाधिमन्थतिमिरादिहरा च वर्तिः ॥ ३११ ॥

वारणसारथिविष्णोर्मातुलगोसर्पकचभसैः ।
पिष्टैस्तलपोटरसे वर्तिर्नयनामयघ्नी द्राक् ॥ ३१२ ॥

(सन्त्रा-)

भृङ्गजगमष्टनिष्कं तुत्थं निष्कद्वयं मरिचशुक्लम् ।
निष्कं च मरिचमेतत् तिमिरघ्नं निम्बतैलपरिपिष्टम् ॥ ३१३ ॥

(वृन्द-)

फलत्रयं चापि कटुत्रयं च
ज्योतिष्ककारञ्जतिलङ्गबीजम् ।
प्रपौण्डरीकं मधुकं सताम्रं
सिन्धूत्थं च स्फटिकं सदारुम् ॥ ३१४ ॥

वचाञ्जनं गैरिकचन्दनं च
द्राक्षा निशा शाबरलोध्रकं च ।
तुत्थं च पीताद्युरोहिणी च
पेष्य करञ्जस्वरसेन सर्वम् ॥ ३१५ ॥

तुत्थादिभागाद् द्विगुणो वचादिः
प्रपुण्डरीकादिगणस्त्रिभागः ।
शेषश्चतुर्भाग इयं निहन्या-
द्वर्तिः सुनेत्री सकलाक्षिरोगान् ॥ ३१६ ॥

काचं सपुष्पं पटलं व्रणं च
कोथं च कण्डूं तिमिरं शुक्लणम् ।

त्रिफला त्रिकटूनि विल्ववचा-
हरितालरसाञ्जनमञ्छाणम् ।
शवराह्वयताम्ररजःस्फटिक
सुरसाञ्जनिकानरजातिरसैः ॥ ३२४ ॥
अथ मार्कवनीरकपूररसैः
सुरया पयसा च गवा मधुना ।
घृततोऽपि च सप्तदिनानि कृता
द्रववर्त्तिरियं नलमध्यगता ॥ ३२५ ॥

तिमिरे पटल इत्यादि पूर्ववत् ।

(अन्या ,

दोषानुरोधेन च नैकशस्त
स्नेहास्रविस्रावणरेकनस्यैः ।
उपाचरेदञ्जनमूर्धवस्ति-
वस्तिक्रियातर्पणलेपसेकैः ॥ ३२६ ॥

सामान्य साधनमिदं प्रतिदोषमतःशृणु ।
वातजे तिमिरे तत्र दशमूलाम्भसा घृतम् ॥ ३२७ ॥
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिवेत्ततः ।
त्रिफलापञ्चमूलानां कषायं क्षीरसंयुतम् ॥ ३२८ ॥
एरण्डतैलसंयुक्तं योजयेत विरेचनम् ।
समूलजालजीवन्तीतुला द्रोणेऽम्भसः पचेत् ॥ ३२९ ॥
अष्टभागस्थिते तस्मिन् तैलप्रस्थं पय समम् ।
पलात्रितयजीवन्तीजरींमूलैः पलोन्मितैः ॥ ३३० ॥
यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ।
लोह एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ॥ ३३१ ॥
वातपित्तामयान् हन्ति तद्विशेषाद्दृगाश्रयान् ।
केशास्यकन्धरास्कन्धपुष्टिलावण्यकान्तिकृत् ॥ ३३२ ॥
सितैरण्डजटासिंहीफलदारुस्थानतैः ।
शताह्वाबिल्वमूलैश्च तैलं पक्वं पयोन्वितम् ॥ ३३३ ॥

नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्त्तिजित् ।
वातपीनसवच्चात्र निरूहं सानुवासनम् ॥ ३३४ ॥
पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ।
विपाचितं पाययित्वा स्निग्धस्य व्यधयेत् सिराम् ॥ ३३५ ॥
शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचनम् ॥ ३३६ ॥
(वाग्भटे)

स्तन्यं वा पद्मकोशीरक्षीरवृक्षाङ्कुरैः शृतम् ।
नस्यं चाज्यं शृतं क्षीरं जीवनीयसितोत्पलैः ॥ ३३७ ॥
(वृद्धे)

सौवीराञ्जनतुत्थक-
शृङ्गीधात्रीफलस्फटिककर्पूरम् ।
पञ्चांशं पञ्चांशं
त्र्यंशमर्धकांशमञ्जनं तिमिरघ्नम् ॥ ३३८ ॥
श्लेष्मोद्भवेऽमृताक्वाथवराकणशृतं घृतम् ।
विध्येत् सिरां पीतवतो दद्याच्चानुविरेचनम् ॥ ३३९ ॥
क्वाथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम् ।
(वाग्भटे)

मनोह्वाशङ्खसिन्धूत्थमरिचैर्वर्तिभिर जयेत् ।
वर्तिः प्रगाढमप्याशु शुद्धपिष्टामयापि च ॥ ३४० ॥
(वृद्धे)

रक्तजे पित्तवत्सिद्धिः क्षीवैश्चात्र प्रसादनैः ॥ ३४१ ॥
•ग्लासयानल्दचोग्रपहिता-

तच्छृतं सघृतं भूयः पचेत् क्षौद्रं क्षिपेद्घने।
शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम्॥ ३४५॥
काचेऽप्येषा क्रिया मुक्त्वा सिरां यन्त्रनिपीडनात्।
आन्ध्याय स्युर्मला दद्यात् साव्ये त्वस्रे जलौकसः॥ ३४६॥
गुळः फेनोऽञ्जनं कृष्णा मरिचं कुङ्कुमादजः।
रसक्रियेयं सक्षौद्रा काचयापनमञ्जनम्॥ ३४७॥
शिलासैन्धवकासीसशङ्खव्योषरसाञ्जनैः।
रसक्रियेयं सक्षौद्रा काचयापनमञ्जनम्॥ ३४८॥
नकुलान्ध्ये त्रिदोषोत्थतैमिर्यविहितो विधिः।
रसक्रिया घृतक्षौद्रगोमयस्वरसद्रुतैः॥ ३४९॥
तार्क्ष्यगैरिकताळीसैर्निशान्ध्ये हितमञ्जनम्।
दध्ना विघृष्टं मरिचं रात्र्यन्धेऽञ्जनमुत्तमम्॥ ३५०॥
संनिवेश्य यकृन्मध्ये पिप्पलीरदहन् पचेत्।
ताः शुष्का मधुना घृष्टा निशान्धे श्रेष्ठमञ्जनम्॥ ३५१॥
घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत्।
सिद्धं घृतं कुम्भयोनेः पत्रैः पाने च पूजितम्॥ ३५२॥
(वाहटे)

क्षौद्रधात्रीरसाभ्यां वा द्विहरिद्रारसाञ्जनैः।
अजामूत्रेण वा कौन्तीकृष्णास्रोतोजसैन्धवैः॥ ३५३॥
गोशकृद्रसपिष्टैर्वा द्विनिशापिप्पलीयुतैः।
कालानुसारीताळीसपत्रयष्ट्याह्वनागरैः॥ ३५४॥
(सङ्ग्रहे)

सिन्धूत्थतैलं स्तनजोपणं च
शार्ङ्गेष्टपत्रस्वरसेन घृष्टम्।
ताम्रेण नक्तान्ध्यमिदं निहन्या-
न्निम्बस्य बीजं मधुनाञ्जनं वा॥ ३५५॥
(योगामृते)

सतैलं द्रोणपुष्पाम्बु कृष्णा वा सशकृद्रसा ।
कर्णविड्वाथ राक्षौद्रमञ्जनात् क्षणदान्ध्यनुत् ॥ ३५६ ॥
(नारायणीये)

मुनितरुदळरसयुक्तं
दिनकरकरशोषितं मरिचम् ।
पुनरपि तेन विघृष्टं
प्रणुदति दोषान्ध्यमञ्जनं तीव्रम् ॥ ३५७ ॥

तद्वच्छकृद्रसाढ्या वैदेही पित्तमाज्यं वा ।
आजौ यकृत्प्लिहानौ खादेज्जम्ब्वथसा दग्ध्वा ॥ ३५८ ॥
(सिद्धयोगे)

खादेद्यकृत्प्लिहानौ च माहिषौ तैलसर्पिषा ॥ ३५९ ॥
(वाग्भटे)

गोदन्तमथ पिप्पल्यः सैन्धवं गैरिकं तथा ।
एतैः कृत्वा तु गुलिका नक्तमान्ध्यस्य भेषजम् ॥ ३६० ॥
(वृद्ध०)

कृष्णा वा गोशकृद्रसेति ।
(चिन्तामणौ)

धूमराग्न्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।
स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ॥ ३६१ ॥
गोशकृद्रसदुग्धाज्यैर्निषेकः शस्यतेऽञ्जनम् ।
स्वर्णगैरिकताम्रीमच्चूर्णितापा समस्यिता । ३६२ ॥
तर्पणं क्षीरसर्पिः स्यादशाम्यति सिराव्यधः ॥ ३६३ ॥

सर्गोपरागानलविद्युदादि-
विलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादि योज्य
तथाञ्जनं हेमघृतेन घृष्टम् ॥ ३६४ ॥
चिन्ताभिघातभीशोकरौक्ष्यान्मन्द्यदृष्टकामनात् ॥ ३६५ ॥

विरेकनस्यवमथुपुटपाकादिविभ्रमात् ।
विदग्धाहारवमनात् क्षुत्तृष्णादिविधारणात् ॥ ३६६ ॥
अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत् ।
यथास्वं तत्र युञ्जीत दोषादीन् वीक्ष्य भेषजम् ॥ ३६७ ॥
(वाग्भटे)

तमालत्रुटिकुङ्कुमान्यसितमुत्पलं पिप्पली-
सिताञ्जनमयोरजो मरिचकाकमाचीत्वचः ।
सयष्टिमधुकाञ्जनान्युदधिफेनमक्ष्यामये-
ष्वनुत्तममतोऽञ्जनं विमलमाशु तैमिर्यहृत् ॥ ३६८ ॥

लिङ्गनाशे नीलिका पटलमान्ध्यमिति पर्यायाः ।
(सश्रुते)

विध्येत् सुजातं निश्चेष्टं लिङ्गनाशं कफोद्भवम् ।
आवर्तक्यादिभिष्षड्भिर्विवर्जितमुपद्रवैः ॥ ३६९ ॥
सोऽसञ्जातो हि विषमो दधिमस्तुनिभस्तनुः ।
शलाकयाऽवकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ ३७० ॥
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत् पुनः ।
श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवैश्चिरात् ॥ ३७१ ॥
श्लैष्मिको लिङ्गनाशो हि सितत्वाच्छ्लेष्मणः सितः ।
तस्यान्यदोषाभिभवात् भवत्यानीलता गदे ॥ ३७२ ॥
(वाग्भटे)

तत्र श्वेतारुणावर्तवदनवस्थिता दृष्टिरावर्तकी । अर्कक्षीरलेशेनेव कूर्चिकापिण्डेनेव चाऽऽचिता शर्करा । शालिशूकाभराजी- वृता राजीमती । स्निग्धविषमदग्धाभा सरुक् छिन्नांशुका । कांस्य समच्छाया चन्द्रकसंस्थाना चन्द्रकी । नैकवर्णा छत्रनिभा छत्रकी । ता न विध्येत् ।

न विध्येदसिराहर्णां न तृट्पीनसकासिनाम् ।
नाजीर्णभीरुवमितशिरःकर्णाक्षिशूलिनाम् ।
नात्युष्णशीतवाताभ्रे नासंपूर्णां च नीलिकाम् ॥ ३७३ ॥
(संग्रहे)

अथ साधारणे काले शुद्धसम्भोजितात्मनः ।
देशे प्रकाशे पूर्वाह्णे भिषग् जानूच्चपीठगः ॥ ३७४ ॥

यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।
अङ्गुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुते मलम् ॥ ३७५ ॥

स्वां नासां प्रेक्षमाणस्य निष्कम्पं मूर्ध्नि धारिते ।
कृष्णादर्धाङ्गुलं मुक्त्वा तदर्धार्धमपाङ्गतः ॥ ३७६ ॥

तर्जनीमध्यमाङ्गुष्ठैः शलाकां निश्चलां धृताम् ।
दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमामन्थयन्निव ॥ ३७७ ॥

सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।
विध्येत् सुविद्धे शब्दः स्यादरुक् चाम्बुलवस्रुतिः ॥ ३७८ ॥
सान्त्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।
शलाकायास्ततोऽग्रेण निर्लिखेद्दृष्टिमण्डलम् ॥ ३७९ ॥

अबाधमानः शनकैर्नासां प्रतिनुदंस्ततः ।
उच्छिङ्घनाच्चापहरेद् दृष्टिमण्डलगं कफम् ॥ ३८० ॥
स्थिरे दोषे चले वापि स्वेदयेदक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ।
घृताप्लुतं पिचुं दत्त्वा बद्धाक्षं शाययेत्ततः ॥ ३८१ ॥

विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ।
निवाते शयनेऽभ्यक्तशिरःपादं हितं त्वथ ॥ ३८२ ॥

(वाग्भट)

यथाशक्ति चैनमुपलालयेत् । उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि त्र्यहं परिहरेत् । स्नानाम्बुपानदन्तधावनाधोमुखशयनानि प्रसादम । स्वेदादीनपि चेष्टेत ।

(गदरे)

शङ्कितो न्यस्येत्सेको गव्यं कोष्णेन सर्पिषा ।
मन्थोपाधानक वाय्यमर्नागात् मधूनं द्रवम् ॥
विलेपो वा स्यादाध्य सर्षपमुस्तादि सेचयेत् ॥ ३८३ ॥

वातघ्नैस्सप्तमे स्वह्नि सर्वथैवाक्षि मोचयेत् ॥ ३८४ ॥

(वाहटे)

तृतीये चाह्नि मुक्त्वाक्षि परिषेचयेदेरण्डपल्लवशृतेन दुग्धोष्णेन दुग्धेन । जीवनीयैर्वा सिद्धेन पयसा हविषा वा । तद्वल्लघुना पञ्चमूलेन । ततः पूर्ववद् बध्नीयात् । ततः प्रभृत्येवमेव प्रत्यहमासप्ताहम् । सप्तमे तु दिवसे सर्वथा मोक्षयेत् । दशमे या भोजयेदेनं श्योपामलकयुक्तं द्रवमीषत्स्नेहलवणं यात्व्यमुष्णोदकद्वितीयं विलेपीं वा । एवमास्वरतो रुजारागादयो नानुवर्तन्ते ॥

(संग्रहे)

यन्त्रणामनुरुन्धेत दर्शेरास्थैर्यलाभतः ।
रूपाणि सूक्ष्मदीप्ताणि सहसा नावलोकयेत् ॥ ३८५ ॥
शोफरागरुजादीनामधिमन्थस्य चोद्भवः ।
अहितैर्वेधदोषाद्य यथास्वं तानुपाचरेत् ॥ ३८६ ॥
कल्किताः सघृता दूर्वायवगैरिकशारिवाः ।
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये ॥ ३८७ ॥
लोध्रसैन्धवमृद्वीकामधुकैश्छागलं पयः ।
शृतमाश्च्योतनं योज्यं रुजारागविनाशनम् ॥ ३८८ ॥
सिरां तथानुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ।
मन्थोक्तां च क्रियां कुर्याद् व्यधे रूढेऽञ्जनं मृदु ॥ ३८९ ॥

(वाहटे)

वेध्येऽक्षिण कार्ये स्वेदादौ नियमोऽयं विधीयते ।
स्वेददाहप्रतीमर्शान् सद्यो विद्धे तु सेचनम् ॥ ३९० ॥
अवपीडं तृतीयेऽह्नि भुञ्ज्याच्चद्रञ्जलौकसः ।
सप्ताहान्ते सिरामोक्षं विरेकं बस्तिकर्म च ॥ ३९१ ॥

(सङ्ग्रह)

आदर्कीमूलमरिचहरितालरसाञ्जनैः ।
विद्धेऽक्षिण सगुला वर्तिर्योज्या दिव्याम्बुपेषिता ॥ ३९२ ॥

(वाहटे)

व्रणवच्चाक्षिरोगेषु भोज्याभोज्यानि निर्दिशेत् ।

अबध्यमानस्य दोषाः ।

अबध्यमानः पुनर्दंशमशकतृणकाष्ठपांसुशीतवातातपादिसंपर्काद् विविधोपद्रवोपद्रुतो दुष्टव्रणतामुपैति । स्नेहश्चास्य न चिरं तिष्ठति । प्रशममपि चिराच्चोपयाति । रूढे च वैवर्ण्यं भवति । अपि च—

घृणितं मथितं भग्नं विश्लिष्टमथ पाटितम् ।
अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति ॥ ६२ ॥
कुष्ठिनामग्निदग्धानां पिडकामधुमेहिनाम् ।
कर्णिकाश्चोन्दुरुविषे क्षारदग्धाविषान्विताः ॥ ६३ ॥
बन्धनीया न मांसपाके गुदपाके च दारुणे ।
शीर्यमाणाः सरुग्दाहाः शोफावस्था विसर्पिणः ॥ ६४ ॥

(सङ्ग्रहे)

आमच्छेदे व्यापद ।

आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ।
रुजातिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ॥ ६५ ॥
व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।
भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ६६ ॥

तिर्यक्छेदविषय ।

तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ।
कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे ॥ ६७ ॥
अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ।

पीडनम् ।

पूयगर्भानणुद्वारान् स्रोतसश्चान्यमर्मगानपि ॥ ६८ ॥
निःस्नेहैः पीडनद्रव्यैः समन्तात्परिपीडयेत् ।
शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति ॥ ६९ ॥
न मुखे चैनमालिम्पेत्तथा दोषः प्रसिच्यते ।
कलाययवगोधूममाषमुद्गहरेणवः ॥ ७० ॥
द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ॥

(वाहटे)

विवर्णान् पिच्छिलान् पूतिगन्धीन् क्लेदस्रावतः ।
व्रणानशुद्धान् विज्ञाय शोधनैरेभिराचरेत् ॥ ७१ ॥

(सङ्ग्रहे)

क्षालनादयः ।

सप्तसु क्षालनाद्येषु सुरसारग्वधादिकौ ।
सुखं दुष्टव्रणे योज्यौ मेहकुष्ठव्रणेषु च ॥ ७२ ॥
अथवा क्षालनं क्वाथः पटोलीनिम्बपत्रजः ।
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ७३ ॥
पटोलतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ ७४ ॥
व्रणान्विशोधयेद्वर्त्या सूक्ष्मास्यान्सन्धिमर्मगान् ।
कृतया त्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ७५ ॥

(वाहटे)

त्रिकल्कः ।

निम्बपत्रनिशाकल्कः सतिलो माक्षिकान्वितः ।
त्रिकल्क इति विख्यातो व्रणशोधनरोपणः ॥ ७६ ॥

(हारीते)

व्रणशोधनानि ।

पुनर्नवात्रिवृत्सिन्धूत्थनिशाकल्कः समाक्षिकः ।
स दुःखसाध्यानुत्सङ्गान् व्रणानाशु विशोधयेत् ॥ ७७ ॥
पुनर्नवनिशार्कच्छदगुञ्जाफलैः कृतः ।
सिन्धूत्थनकुलैः कल्को मध्वाढ्यो व्रणशोधनः ॥ ७८ ॥
दुष्टव्रणानां सर्वेषां कल्को लाङ्गलिमूलजैः ।
शस्तं तत् पक्वतैलं वा शोधने सैन्धवान्वितः ॥ ७९ ॥
तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुतैः ।
त्रिवृत् घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ॥ ८० ॥

(सिद्धसारे)

धूपः ।

वाताभिभूतान्सास्रावान्वा धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ८१ ॥

उत्सादनम् ।

निर्वापयेद् भृशं शीतैः रक्तपित्तविषोल्बणान् ।
शुष्काल्पमांसे गंभीरे व्रणे उत्सादनं हितम् ॥ ८२ ॥
(पाइटे)

अश्वगन्धापामार्गताक्ष्र्यशैलसुवर्चलाबलातिबलानन्ताधातकीकुसुमसमंगाभिः पद्मकादिवर्गेण न्यग्रोधादिना च कल्कः, तथा सर्पि-ष्यभ्यञ्जनार्थे । (चक्रे)

अथान्मांसादमांसानि विधिनोपहितानि च ।
मांसं मांसादमांसेन वर्धते शुद्धचेतसः ॥ ८३ ॥

उत्सन्नदुष्टमांसानां व्रणानामवसादनम् ।
जातीमुकुलकासीसमनोह्वालपुराग्निकैः ॥ ८४ ॥

क्षारकर्मणा विशोध्या ।

उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ।
व्रणान् सुदुःशोध्यांश्च शोधयेत् क्षारकर्मणा ॥ ८५ ॥

अग्निकर्मणा शोध्या ।

स्रवन्तोऽश्मरिजा मूत्रं ये चान्ये रक्तवाहिनः ।
छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च साधनैः ॥ ८६ ॥
साध्यमाना न शुध्यन्ति शोध्याः स्युस्तेऽग्निकर्मणा

सकृमीणां व्रणानां चिकित्सा ।

अरक्षया व्रणे यस्मिन्माक्षिका निक्षिपेत्कृमीन् ॥ ८७ ॥
ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ।
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ॥ ८८ ॥
गोमूत्रकल्किता लेपः सेकः क्षाराम्बुना हितः ।
प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ॥ ८९ ॥
(वाइटे)

---

१ 'स्युमासाघात' इति पाठान्तरम् । २. साधनैः इति च पुस्तकद्वयेऽपि पाठः ।

क्षीरमौदुम्बरं शस्तं तथा चास्फोतजं पयः ।
व्रणजन्तुषु सर्वेषु दुग्धं चोत्तमकार्णिजम् ॥ ९० ॥
(हारिश्चन्द्रे)

व्रणस्योदरस्थं कृमिव्रातमुग्रं
वटक्षीरबिन्दुर्निषिक्तो निहन्ति ।
अलब्धे च तस्मिन् सुपिष्टा च *मुष्टिः
सुधा च प्रदेया वधाय कृमीणाम् ॥ ९१ ॥

कटुकक्षारसंयुक्तं कल्कमश्वघ्नमूलजम् ।
व्रणकृमिं निहन्त्याशु व्रणदौर्गन्ध्यनाशनम् ॥ ९२ ॥
(तन्त्रान्तरे)

कार्पासफलादिरसक्रिया ।

कार्पासं फलगेहधूमबकुलं गुञ्जाफलं शंखजं
क्षारं रोममयीं च नागसहितं पथ्यां रसे कैंशुके ।
पिष्ट्वा कंसयुगेन तैलसहितं घृष्टेयमाकाण्र्यतः
क्षिप्रं हन्ति रसक्रिया चिरभवान्दुष्टव्रणान्सस्रुतीन् ॥ ९३ ॥
(वृन्द०)

व्रणानामथ शुद्धानां रोपणानि प्रयोजयेत् ॥
(संग्रहे)

क्षालनादिः ।

प्रक्षालनार्थे तु पयोद्रिपानां क्वाथं तिलारिष्टनिशाश्वकल्कम् ।
क्षौद्रेण दद्याद् व्रणशोधनार्थे तत्कल्कमाज्येन तु रोपणाय ॥ ९४ ॥
(योगामृते)

रोपणम् ।

शुद्धानां रोपणे योज्यमुत्सादाय यदीरितम् ।
अश्वगन्धा रुहा लोध्रं कट्फलं मधुयष्टिका ॥ ९५ ॥
समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ।
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ९६ ॥
कल्कं संरोपणं कुर्यात् तिलजं मधुसंयुतम् ।
स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥ ९७ ॥

* नाराचाद्रिस्थमव्यांयो यष्टिकन्द इति वैद्यकप्रसिद्धिभोरवगम्यते ।

सक्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनं परम् ।
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशु रोपणः ॥ ९८ ॥
(वाग्भटे)

पित्तोपसृष्टान् गंभीरान् दाहपाकप्रपीडितान् ।
कार्पासफलमिश्रेण जयेच्छोधनसर्पिषा ॥ ९९ ॥
(सौश्रुते)

घृतानां निर्देशाः ।

सास्रपित्तविषागन्तुगम्भीरान् सोष्मणो व्रणान् ।
क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ॥ १०० ॥
रोपणौषधसिद्धेन तैलेन कफवातजान् ॥
(वाग्भटे)

अबध्यानां चलस्थानां शुद्धानां वा प्रशुष्यताम् ।
यथास्वं रोपणैः कुर्याद्रसजार्द्रनिशाद्वयैः ॥ १०१ ॥

समानां स्थिरमांसानां त्वक्स्थानां चूर्णं इष्यते ।
नीरुजामवगाढानां शुद्धानां वर्तयो हिताः ॥ १०२ ॥
(सद्वैद्ये)

अन्तःशल्यानणुद्वारान् गम्भीरान्मांससंश्रितान् ।
सन्धिमर्मनिमिष्टांश्च शोधयेद्वर्तिभिर्व्रणान् ॥ १०३ ॥

उत्सन्नदुष्टपिशिते संक्लिष्टश्यामशोणिते ।
व्रणे प्रच्छर्दनं शस्तं कफदुष्टे विशेषतः ॥ १०४ ॥

विरेचनं पित्तदुष्टे दीर्घकालानुबन्धिनि ।
रूक्षे सवेदने वस्तिरधःकाये विशेषतः ॥ १०५ ॥

जत्रूर्ध्वजे च श्वयथौ कण्ड्वाढ्ये तीक्ष्णनावनम् ।
तज्ज एवाऽनिलाढ्ये तु श्वयथौ स्नेहनावनम् ॥ १०६ ॥

तथा सशोफकण्ड्वास्रे धूमो वातकफोल्बणे ।
रुजादिमति वक्त्रस्थे यथास्वं कवलो हितः ॥ १०७ ॥
(वाग्भटे)

---

१. घनिराद्यै मुद्रितपद्धपाठ

द्वे पञ्चमूले वर्गश्च वातघ्नो वातिके हितः ।
न्यग्रोधपद्मकाद्यौ तु तद्वत्पित्तास्रदूषिते ॥ १०८ ॥
आरग्वधादिः श्लेष्मघ्नः कफे मिश्रस्तु मिश्रजे ।
एभिः प्रक्षालनालेपघृततैलरसक्रियाः ॥ १०९ ॥
चूर्णो वर्तिश्च संयोज्या व्रणे सप्त यथायथम् ॥
(वाग्भटे)

पानसेकादिषु घृतम् ।

पित्तविद्रधिवीसर्पशोफकुष्ठघृतानि च ।
सर्वव्रणेषु योज्यानि पानसेकप्रलेपने ॥ ११० ॥
(संग्रहे)

दूर्वास्वरसकल्काभ्यां सिद्धं तैलं च रोपणम् ।
(चक्रपाणिः)

प्रपौण्डरीकमधुककाकोलीद्वयचन्दनैः ॥ १११ ॥
साधितं तैलमाज्यं वा तद्वत्कम्पिल्लकेन वा ।
दूर्वारसेन वा दार्व्यास्त्वचा वा व्रणरोपणम् ॥ ११२ ॥
(वृन्दे)

जात्यादिघृतम् ।

जातीनिम्बपटोलपत्रकटुकादार्वीनिशाशारिवा-
मञ्जिष्ठाभयतुत्थसिक्थमधुकैर्नक्ताह्वबीजैः समैः ।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजा व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ ११३ ॥
(वाग्भटे)

निम्बेक्ष्वाक्वादितैलम् ।

निम्बेक्ष्वाकुपटोलजातिरजनीतोये सुगन्धाग्निका-
दार्वीतुत्थकरञ्जबीजमधुकैर्मञ्जिष्ठसिक्थाभयैः ।
सिद्धं तैलमथाज्यमेभिरथवा मर्माश्रिताः स्राविणः
सूक्ष्मास्याः सरुजा व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ ११४ ॥
(सिद्धयोगे)

पद्मकाद्यभि स्कन्दसंज्ञम् ।

पद्माह्वमधुनार्कबीजफलिनीव्योषाब्दजीवप्रिय-
सिद्धार्थत्रिफलाविडङ्गकटुकाचक्रेजीवन्तीशारिवाः ।

मञ्जिष्ठासननक्ततुत्थहिमिश्रं सिन्धूत्थलोध्राङ्कोलं
सिद्धं मार्कवकाकमाचिकरसे तैलं व्रणे शोधनम् ॥ ११५ ॥

स्कन्दतैलमिदं नाम्ना नाडीरोपणमुत्तमम् ।
दुष्टव्रणापचिग्रन्थिगण्डमालाहरं परम् ॥ ११६ ॥

(चक्रदत्ते)

निम्बार्कादितैलम् ।

निम्बार्कनिशास्नुक्कुक्कुटकरसे शृतं तैलम् ।
कल्कं लाङ्गल्यनलं व्रणशोधनरोपणे शस्तम् ॥ ११७ ॥

पुरान्तकतैलम् ।

निम्बाकुलीवसुकरम्यकनक्तवैरी-
पिचाव्रणघ्नसुवहाखरमञ्जरीणाम् ।
निम्बस्य वापि घनजस्य रसे विपक्वं
तैलं पुरान्तकमिदं व्रणरोपणाय ॥ ११८ ॥

(वृन्दे)

अन्यानि तैलानि ।

दिनेन्द्रवल्लीस्वरसे विपक्वं तच्चर्मकल्केन पुनर्नवस्य ।
सारे च तैलं व्रणरोपणार्थं संशोधनार्थं च वदन्ति तज्ज्ञाः ॥ ११९ ॥

(हारीते)

महावृक्षार्कजे दुग्धे मधूच्छिष्टेन साधितम् ।
तैलं तत्सम्प्रयोगेण दुष्टव्रणविरोपणम् ॥ १२० ॥

दुग्धे कल्केन शृतं वर्षाभूभूकदम्बमूलभुवा ।
तैलं रोपयति द्राक् व्रणमपि गाढं सपूयमपि ॥ १२१ ॥

दीपाव्रणघ्नपूगात्रिफलातुल्यैः खरांशुमन्तकम् ।
धुर्धूरदिनेशत्वक्चूर्णैस्तैलं भवेद् व्रण्यम् ॥ १२२ ॥

मरिचनिशाहंसाद्रिक्षीरद्रुमतुलसीपूगमेदोभिः ।
व्रणहितरुद्म्बजम्बूनृपतरुचिञ्चास्थिनिर्यासैः ॥ १२३ ॥

सलिलरिपुभेदहारीकृष्णवृहत्त्वक्षु भावितं तैलम् ।
पटुरोमभस्मयुक्तं व्रणहितमिति कथ्यते सद्भिः ॥ १२४ ॥

पद्मत्रिफलारजनीतुल्यसमङ्गासु साधितं तैलम् ।
नाशयति व्रणजालं क्रोध एक इव गुणजालम् ॥ १२५ ॥
(काञ्चीपुरवासी)

ककुभादिचूर्णम् ।

ककुभोदुम्बराश्वत्थजम्बूकट्फललोध्रजैः ।
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ १२६ ॥
(वाहटे)

त्रिफलादिचूर्णम् ।

त्रिफला मधुकं लोध्रं मञ्जिष्ठा विल्वपेशिका ।
समङ्गा धातकी लाक्षा निर्यासः शाल्मलेरपि ॥ १२७ ॥
पलाशस्य च निर्यासो निर्यासः ककुभस्य च ।
सूक्ष्माण्येतानि चूर्णानि व्रणानां चापि रोपणम् ॥ १२८ ॥
(भेलात्)

कठिनत्वं व्रणा यान्ति सारैर्गन्धैश्च धूपिताः ।
*सर्पिर्मज्जावसातैलैः शैथिल्यं यान्ति हि व्रणाः ॥ १२९ ॥
(चरके)

प्रलेपाः ।

लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ॥ १३० ॥
कालीयकलताम्रास्थिहेमकालारसोत्तमैः ।
लेपः सगोमयरसः सवर्णकरणः परम् ॥ १३१ ॥
अयोरजस्सकासीसत्रिफलाकुंकुमानि च ।
प्रलेपः कुरुते काष्र्ण्यं सद्य एव नवत्वचि ॥ १३२ ॥
दग्ध्वयानूपसत्वानां श्लक्ष्णचूर्णितया त्वचा ।
भल्लाततैलाप्लुतया शुद्धमालेपयेद् व्रणम् ॥ १३३ ॥
(मद्रहे)

त्रिफलामार्कवं लाक्षां कासीसं लोहजं रजः ।
लेपोऽयमचिरात्कुर्यात् व्रणकाष्र्ण्यं नवत्वचि ॥ १३४ ॥

---

१ 'कालेयक' मुद्रितवाह्रटे ।

* सर्पिर्मज्जावसायूपैः इति मुद्रितचरके ।

रोचना कुंकुमाग्रास्थि तुल्यं शाल्मलिकण्टकाः ।
कालीयकं च सावर्ण्यं कुर्युर्व्यासमभासतः ॥ १३५ ॥

(क्षारपाणे[1])

सिद्धं भृङ्गीरसे धात्रीदन्तीदन्तमषीयुतम् ।
तैलमासनपात्रस्थं केश्यं स्याद् व्रणकार्ष्ण्यकृत् ॥ १३६ ॥

(काञ्चीपुरस्वामी)

दग्धो वारणदन्तोऽन्तर्धूमं तैलं रसाञ्जनम् ।
रोमसंजननो लेपस्तद्वत्तैलपरिप्लुता ॥ १३७ ॥

चतुष्पान्नखरोमास्थित्वक्शृङ्गखुरजा मषी ॥

(वाहटे)

कपित्थान्मांसमुद्धृत्य मूत्रस्याज्यस्य पूरणम् ।
क्षिपेच्चात्र मनोह्वालावंशनिर्लेखरोचनाः ॥ १३८ ॥
कासीसं च मधुच्छादं मासं न्यस्तं ततो भुवि ।
अघोऽर्जुनस्य तच्छुक्लव्रणालेपः सवर्णकृत् ॥ १३९ ॥

(वृद्धे)

व्रणिनां पथ्यापथ्यम् ।

भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः ।
मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ १४० ॥

बालमूलकवार्ताकतण्डुलीयकवास्तुकम् ।
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ १४१ ॥
सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम् ।
जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरम् ॥ १४२ ॥
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ।
अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ १४३ ॥
अजीर्णात्तानिलादीनां विभ्रमो बलवान् भवेत् ।
ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ १४४ ॥

(वाहटे)

---

१. (मूत्रस्याज्यस्य पूरणमिति पुस्त. ।)

व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वप्नात् ते च मृत्युश्च मैथुनात् ॥ १४५ ॥
(सिद्धसारे)

स्थानासनं चंक्रमणमुच्चैर्भाषणमेव च ।
व्रणितो न निषेवेत शक्तिमानपि मानवः ॥ १४६ ॥

नवधान्यमाषतिलकळायमसूरहरेणुशाकाम्ललवणपिण्याकपिष्टमयवल्लूरजाङ्गलमांसमत्स्यशीतोदकपायसदुग्धदधितक्रप्रभृतीनि च परिहरेत् ॥
(मयक)

व्रणान्तो नवधान्यादिर्योऽयं वर्ग उदीरितः ।
दोषसञ्जननो ज्ञेय विज्ञेयः पूयवर्धनः ॥ १४७ ॥
(सौश्रुते)

न चैनं त्वरमाणोऽन्तस्सदोषमुपरोहयेत् ।
सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ॥ १४८ ॥

रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ।
मासान् षट् सप्त वा नृणां विधिरेष प्रशस्यते ॥ १४९ ॥
(सङ्ग्रहे)

सद्योव्रणाः ।

सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः ।
अनन्तैरपि तैरद्रमुच्यते जुष्टमष्टधा ॥ १५० ॥

घृष्टावकृत्तविच्छिन्न*प्रविलम्बिनिपातितम् ।
विद्धं भिन्नं विदलितं, तत्र घृष्टं लरीक्रया ॥ १५१ ॥

रक्तलेशेन वा युक्तं सश्लोषं छेदनात्स्रवेत् ।
अवगाढं ततः कृत्तं विच्छिन्नं स्यात्ततोऽपि च ॥ १५२ ॥

प्रविलम्बि सशेषेऽस्थि पतितं पातितं तनोः ।
सूक्ष्मास्यशल्यविद्धं तु विद्धं कोष्ठविवर्जितम् ॥ १५३ ॥

भिन्नमन्यद्विदलितं मज्जरक्तपरिप्लुतम् ।
[1]प्रहारपीडनोत्पेषात्सहास्थ्ना पृथुतां गतम् ॥ १५४ ॥
(वाग्भटे)

१. प्रहारपीडनोद्घृष्टात्सहास्थ्ना इ पाठः । * प्रविलम्बिपातितम् इति मुद्रितवाग्भटे ।

आगन्तोर्व्रणस्य प्रागुपदिष्टः सम्भवः। तत्र यथायथं प्रतीकारश्च। विविधाभिघातजनितैस्तु सुबह्वाकृतिभिरपि सद्योव्रणैरधिष्ठितमङ्गं समासात् त्रिविधं भवति। छिन्नं विद्धं पिच्छितं च। त्रिविधमपि प्रतत्त्वगादिक्षणनात् क्षतमित्युच्यते। तत्र छिन्नं पञ्चधा भिद्यते। विद्धं त्वष्टविधम्। पिच्छितं तु द्विविधम्।

(सुश्रुते)

समासतो लक्षणतः षड्विधः परिकीर्त्तितः।
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्छितमेव च॥ १५५॥
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम्।

(इति सौश्रुते)

सीवनविधिः।

सद्यः सद्योव्रणान्सीव्येद् विवृतानभिघातजान्॥ १५६॥
मेदोजान् लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः।
शिरोऽक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु॥ १५७॥
ग्रीवाललाटमुष्कस्फिग्मेढ्रपायूदरादिषु।
गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च॥ १५८॥
न तु वंक्षणकक्ष्यादावल्पमांसे चले व्रणान्।
वायुनिर्वाहिणः शल्यगर्भान्क्षारविषाग्निजान्॥ १५९॥
सीव्येद्बलास्थिशुष्कासृक्तृणरोमापनीय तु।
प्रलम्बिमांसं विच्छिन्नं निवेश्य स्वनिवेशने॥ १६०॥
सन्ध्यस्थ्यवस्थिते रक्ते स्नाव्या सूत्रेण वल्कलैः।
सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु॥ १६१॥
सान्त्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रवैः।
अञ्जनक्षौमजमषीफलिनीसल्लकीफलैः॥ १६२॥
सलोध्रमधुकैर्दिग्धे युञ्ज्याद् बन्धादि पूर्ववत्।
व्रणो निःशोणितौष्ठो यः किञ्चिदेनावलिख्य तम्॥ १६३॥
सञ्जातरुधिरं सीव्येत् सन्धानं ह्यस्य शोणितम्।

(वाग्भटे)

बन्धनम् ।

यद्दूष्यागन्तु व्रणं सद्यो घृतक्षौद्रसमन्वितम् ।
शीता क्रिया प्रयोक्तव्या पित्तरक्तोष्मशातनी ॥ १६४ ॥
(सिद्धसारे)

सद्यः सद्योव्रणं शुद्धं संसीव्याञ्जनलोध्रकम् ।
फलिनीसर्जलाक्षांश्च दत्वा सञ्चूर्ण्य बन्धयेत् ॥ १६५ ॥
आसप्तरात्रमाज्येन मध्वाक्तेन प्रलेपयेत् ॥
(सिद्धयोगे)

तालस्य पेशीं क्रमुकं च बालं
लाक्षाञ्जनं सर्जरसं कपित्थम् ।
पथ्यां च सञ्चूर्ण्य परिक्षतानां
क्षतेषु दत्वा परिबन्धनीयम् ॥ १६६ ॥
(तन्त्रान्तरे)

पायितलिकुचफवोष्णस्वरसेन विदिह्य बन्धयेत् सद्यः ।
सद्योव्रणं समस्तं विदिग्धाच्छगणशुद्धपिण्डेन ॥ १६७ ॥
(काशीपुरयासी)

पत्रेण खरमञ्जर्या मृदितेनावपीडितम् ।
क्षणेन रुधिरं तिष्ठेत् सेतुबन्धादिवोदकम् ॥ १६८ ॥
(तन्त्रान्तरे)

अपामार्गस्य संसिद्धं पत्रोत्थेन रसेन तु ।
सद्योव्रणेषु रक्तं तु प्रवृत्तं परितिष्ठति ॥ १६९ ॥

उदगाग्रागतं मूलं शाल्यास्तण्डुलवारिणा ।
पिष्ट्वा प्रलेपनं दद्यात् सद्यःक्षतविरोपणम् ॥ १७० ॥
(बिन्दुसारे)

श्वेतस्य शरपुङ्खस्य मूलं जम्बेतरस्य वा ।
व्रणे निष्ठीवनं कुर्यात् सद्योव्रणचिकित्सितम् ॥ १७१ ॥
(धोधरसूरे)

सद्यः सद्योव्रणं सिञ्चेद्यष्टीमधुकसर्पिषा ।
तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ १७२ ॥

---

१. सिञ्चेदय यष्ट्याह्वसर्पिषा इति मुद्रितपाठादृदम्पाठः.

क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ।
कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ १७३ ॥
(वाग्भटे)

[1]सद्यःव्रणचिकित्सा ।

या वेदना शस्त्रनिपातजाता
तीव्रा शरीरं प्रदुनोति जन्तोः ।
घृतेन सा शान्तिमुपैति सिक्ता
कोष्णेन यष्टीमधुकान्वितेन ॥ १७४ ॥
(पाठ्यधौ)

साप्ताहिको विधिः ।

सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः ।
मधुसर्पिः प्रयुञ्जीत पित्तघ्नयश्च हिमाः क्रियाः ॥ १७५ ॥
ससंरम्भेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ।
उपवासो हितं भुक्तं सततं रक्तमोक्षणम् ॥ १७६ ॥
घृष्टविच्छिन्नयोरेष सुतरामिष्यते विधिः ।
तयोर्हि रूपं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ १७७ ॥
अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र निक्षते ।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ १७८ ॥
स्नेहपानपरीषेकस्वेदलेपोपनाहनम् ।
स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ १७९ ॥
इति साप्ताहिकः प्रोक्तः सद्यो व्रणहितो विधिः ।
सप्ताहाद् गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ १८० ॥
(धान्वे)

क्षालनार्थे आरग्वधादि ।

क्षालनाभ्यङ्गसेकेषु तस्मिन्दुष्टे प्रयोजयेत् ।
आरग्वधादिकं वर्गं सुरसादिं च शोधनम् ॥ १८१ ॥
कल्कस्त्रिवृच्चित्रकैरण्डपत्रैर्योज्यः ससैन्धवैः ।
वातिके पैत्तिके कुम्भपट्याहुरसनीतिलैः ॥ १८२ ॥

---

१. 'घृष्टे विद्लिष्टे चैव' इति च सुश्रुतपाठान्तरपाठ

श्लेष्मिके तिक्ततैलोद्यानिकुम्भस्त्वार्चिकाग्निकैः ॥

(सङ्ग्रहे)

दुष्टव्रणेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ।
विशोषणं तथाहारं शोणितस्य च मोक्षणम् ॥ १८३ ॥

(सौश्रुते)

सद्योव्रणे पृथक् पृथक् सामान्यं कर्म ।

प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथक् पृथक् ।
घृष्टे रुजां निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १८४ ॥

कल्कादीन्यवकृत्ते तु विच्छिन्नमविलम्बिनोः ।
सीवनं विधिनोक्तेन बन्धनं चानुपीडनम् ॥ १८५ ॥

असाध्यं स्फुटितं नेत्रमुदीर्णं लम्बते तु यत् ।
सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक् ॥ १८६ ॥

पीडयेत्पाणिना पद्मपत्रव्यवहितेन तत् ।
ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ १८७ ॥

विपक्वमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः ।
सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ १८८ ॥

गलपीडावसन्नेऽक्ष्णि वमनोत्कासनक्षवाः ।
प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत् ॥ १८९ ॥

कर्णे स्थानाच्च्युते स्यूत्वा स्रोतस्तैलेन पूरयेत् ।
कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ॥ १९० ॥

समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निरन्तरम् ।
आजेन सर्पिषा चात्र परिषेकः प्रशस्यते ॥ १९१ ॥

उत्तानोऽन्नानि भुञ्जीत शयीत च सुयन्त्रितः ।
घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते ॥ १९२ ॥

स्यूत्वा वेल्लितबन्धेन बध्नीयाद् घनवाससा ।
चर्मणा गोष्फणाबन्धः कार्यश्चामङ्गते व्रणे ॥ १९३ ॥

---

१. वमनोत्क्षवकश्वा . २. स्यूत्वे इति मुद्रितादर्शपाठः.

पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ।
प्रवेश्य वृषणौ सीव्येत् सेवन्या तुन्नसंज्ञया ॥ १९४ ॥
कार्यश्च गोफणाबन्धः कट्यामावेश्य पट्टकम् ।
स्नेहसेकं न कुर्वीत तेन क्लिद्यति हि व्रणः ॥ १९५ ॥
कालानुसार्य्यगुर्वेलाजातीचन्दनपर्पटैः ।
शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम् ॥ १९६ ॥
छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन युक्तितः ।
बध्नीयात्कोशबन्धेन ततो व्रणवदाचरेत् ॥ १९७ ॥
कार्य्यः शल्याहृते विद्धे क्रमो भग्नात्तु पिच्छिते ।
शिरसोऽपहृते शल्ये बालवर्त्तिं प्रवेशयेत् ॥ १९८ ॥
मस्तुलुङ्गस्रुतेः शुद्धो हन्यादेनं चलोऽन्यथा ।
व्रणे रोहति चैकैकं शनैरपनयेत्कचम् ॥ १९९ ॥
मस्तुलुङ्गस्रुतौ खादेन्मस्तिष्कानन्यजीवजान् ।
शल्ये हृतेऽङ्गादन्यस्मात्स्नेहवर्त्तिं निधापयेत् ॥ २०० ॥
दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ।
सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ २०१ ॥
भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छा हृत्पार्श्ववेदना ।
ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनन्दनम् ॥ २०२ ॥
सङ्गो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ।
लोहगन्धित्वमास्ये स्याद् गात्रेऽपि च विगन्धिता ॥ २०३ ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ।
आध्मानेनातिमात्रेण शूलेनापि विशस्यते ॥ २०४ ॥
पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत् ।
नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥ २०५ ॥

अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते ।
असृजा स्यन्दमानेन पार्श्वे मूत्रेण वस्तिवत् ॥ २०६ ॥

तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननम् ।
रक्ताक्षं पाण्डुवदनमानद्धं च विवर्जयेत् ॥ २०७ ॥

आमाशयस्थे वमनं हितं पक्वाशयाश्रिते ।
विरेचनं निरूहश्च निःस्नेहोष्णैर्विशोधनैः ॥ २०८ ॥

यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः ।
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ २०९ ॥

अतिनिःस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक् ।
अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं न त्वतोऽन्यथा ॥ २१० ॥

प्रक्षाल्य पयसा दिग्धं तृणशोणितपांसुभिः ।
प्रवेशयेत् कृत्तनखो घृतेनाक्तं शनैः शनैः ॥ २११ ॥

क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिःपरिप्लुतम् ।
अङ्गुल्या प्रमृशेत्कण्ठं जलेनोद्वेजयेदपि ॥ २१२ ॥

तथान्त्राणि विशन्त्यन्तस्तत्कालं पीडयेन च ।
वेष्टयित्वा तु पट्टेन घृतेन परिषेचयेत् ॥ २१३ ॥

अनुवर्तेत पथ्यं च यथोक्तां व्रणयन्त्रणाम् ।

पाळीसाद्यं तैलम् ।

पाळीसं पद्मकं मांसी हरेण्वगरुचन्दनम् ॥ २१४ ॥

हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ।
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ॥ २१५ ॥

गुदभ्रंशादिचिकित्सा ।

विश्लिष्टदेहं मथितं क्षीणं मर्महताहतम् ।
आसयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम् ॥ २१७ ॥

(वाहटे)

रोपणे परिषेके च पाने च व्रणिना सदा ।
तैलं घृतं वा यथार्थं शरीरं चानवेक्ष्य च ॥ २१८ ॥

घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ ।
सद्योव्रणेषु देयानि तानि वैद्येन जानता ॥ २१९ ॥

(सौश्रुते)

(भग्नस्य स्वरूपम्)

पतनपीडनादिभिरभिघातविशेषैरनेकविधमस्थिभङ्गमुपदिशन्ति । तत्तु भङ्गजातं द्व्यधिष्ठानं सन्धावसन्धौ च । तत्र सन्धिमुक्तं षड्विधम् । उत्पिष्टं विश्लिष्टमवक्षिप्तमतिक्षिप्तं तिर्यक्क्षिप्तं विवर्तितमिति । तस्य च सामान्यलक्षणं प्रसारणाकुञ्चनविवर्तनाक्षेपणाशक्तिरुग्रुजता स्पर्शासहिष्णुत्वं च । असन्धिभग्नं पुनर्द्वादशविधम् । तद्यथा— कर्कटकं अश्वकर्णं स्फुटितं वेल्लितं अस्थिच्छल्लिकाश्वकर्णं पिच्चितं दारितं चूर्णितमतिपातितं शोषितं मज्जानुगतमिति । श्वयथुबाहुल्यस्पन्दनस्पर्शासहिष्णुता अवपीड्यमाने सशब्दतास्रस्ताङ्गता वेदनाविप्रकीर्णस्पर्शाश्च सर्वावस्थासु शर्म न भवतीति साधारणमसन्धिभग्नरूपम् ॥

(धम्मे)

साध्यासाध्यम् ।

पार्श्वाण्युदारि यत्स्थिरं स्पर्शे शब्दं करोति यत् ।
यथाश्लेषः सन्धिर्मध्यमस्थ्नो विदारितः ॥ २२० ॥

भग्नं यद्वाभिघातेन किञ्चिद्देशावशेषितम् ।
उन्नम्यमानं धृतयतश्च भज्जति मज्जति ॥ २२१ ॥

छुःसाध्यं कृशाशक्तवातलाल्पाशिनामपि ।
भिन्नं कपालं चरकस्य सन्धिमुक्तं च्युतं च यत् ॥ २२२ ॥

क्षपन प्रविपिष्ट च भग्नं यत्नाद्विवर्जयेत् ।
असंश्लिष्टकपालं च ललाटं चूर्णितं तथा ॥ २२३ ॥

---

१ शरीर्मवेक्ष्य च क पाठः

यत्र भग्नं भवेच्छत्रुशिरःपृष्ठस्तनान्तरे ।
सम्यग्यमितमप्यस्थि दुर्न्यासाद् दुर्निबन्धनात् ॥ २२४ ॥
संक्षोभादपि यद् गच्छेद् विक्रियां तद्विवर्जयेत् ।
आदितो यच्च दुर्जातमस्थिसन्धिरथापि वा ॥ २२५ ॥
तरुणास्थीनि नाम्यन्ते भज्यन्ते नलकानि तु ।
कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा ॥ २२६ ॥
(वाग्भटे)

भग्नस्य बन्धनादयः ।

भग्नं संस्थापनोपायैस्तैस्तैः संस्थाप्य निश्चलम् ।
पट्टेनाथ घृताढ्येन परिवेष्ट्योपरि क्षिपेत् ॥ २२७ ॥
मटादिवल्कं वंशं वा मध्यमं बन्धमाचरेत् ॥
(तन्त्रान्तरे)

शिथिलेन हि बन्धेन सन्धेः स्थैर्यं न जायते ।
गाढेनातिरुजादाहपाकश्वयथुसम्भवः ॥ २२८ ॥
त्र्यहात् त्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ।
साधारणे तु पञ्चाहाद् भङ्गदोषवशेन वा ॥ २२९ ॥
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ।
सं पञ्चमूलसिद्धेन पयसा तु सवेदनम् ॥ २३० ॥
सुखोष्णं चावचार्यं स्याच्चक्रतैलं विजानता ।
विभज्य देशं कालं च वातघ्नौषधसंयुतम् ॥ २३१ ॥
प्रतनं लेपसेकांश्च विदध्याद् भृशशीतलान् ।
पुष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥ २३२ ॥
प्रातः प्रातः पिबेद् भग्नः शीतलं लाक्षया युतम् ।
सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ॥ २३३ ॥
कषायैः प्रतिसार्योऽथ शेषो भग्नोदितः क्रमः ।
कल्पानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥ २३४ ॥
बन्दमीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत् ।
तान् समान् सुस्थितान् ज्ञात्वा फलिनीलोध्रकट्फलैः ॥२३५॥

सपङ्काधातकीपुष्पैश्चूर्णितैरवचूर्णयेत् ।
धातकीलोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः ॥ २३६ ॥
(चाङ्गदे)

विश्लिष्टोत्पिष्टयोः सन्धिभेदमेवाभिघट्टयन् ।
उपाचरेद्यथास्वं च विसर्पादीनुपद्रवान् ॥ २३७ ॥
(सङ्ग्रहे)

इति भग्न उपक्रान्तः स्थिरधातोर्ऋतौ हिमे ।
मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा ॥ २३८ ॥

पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ।
मासैः स्थैर्यं भवेत्सन्धेर्यथोक्तं भजतो विधिम् ॥ २३९ ॥
(चाङ्गदे)

अङ्गुल्यादिभग्नस्य चिकित्सा ।

सामान्यसाधनमिदं विशेषो वक्ष्यते ततः ।
भग्नां सन्धिविमुक्तां वा कृत्वा पूर्ववदङ्गुलिम् ॥ २४० ॥

तनुनावेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ।
कौर्परं तु भिषक् सन्धिमङ्गुष्ठेनानुमार्जयेत् ॥ २४१ ॥

अनुमृज्य ततः सन्धिं पीडयेत्कूर्पराभ्युतम् ।
प्रसार्याकुञ्चयेच्चैनं स्नेहसेकं च कारयेत् ॥ २४२ ॥

मणिबन्धे च जानौ च गुल्फे चैष क्रियाक्रमः ।
उभे तले समे कृत्वा तलभग्नस्य देहिनः ॥ २४३ ॥

पक्षीयाऽभ्यामतैलेन परिषेकं च कारयेत् ।[1]
प्राग्गोमयमयं पिण्डं धारयेन्मृण्मयं ततः ॥ २४४ ॥

हस्ते जातबले कार्यं क्रमात्पाषाणधारणम् ।
दन्तानभग्नांश्चलितान् सरक्तानवपीडयेत् ॥ २४५ ॥

वयस्यस्याम्बुभिः शीतैः परिषिच्य प्रलेपयेत् ।
बहिर्निर्वापणैरन्तः सन्धानीयैरुपाचरेत् ॥ २४६ ॥

---

1. 'शु' ख. पाठ.

मलाढ्यमृते क्षीरे पद्मकादिभृतं घृतम् ।
नस्यगर्भ्यपयोयोग्यं चलद्वृद्धिकहितानि च ।
ग्रीन्मासान्मृदु भुञ्जीत रसान्नं कठिनं त्यजेत् ॥ २४७ ॥

(वाग्भटे)

कटीजङ्घोरुभग्नानां कपाटशयनं हितम् ।
यन्त्रणार्थं तथा कीलाः पञ्च कार्या निबन्धनाः ॥ २४८ ॥
जङ्घोरुपार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ।
श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ॥ २४९ ॥
विमोक्षे भग्नसन्धीनां विधिमेवं समाचरेत् ।
सन्धींश्चिरविमुक्तांस्तु स्निग्धस्विन्नान्मृदूकृतान् ॥ २५० ॥
उक्तैर्विधानैर्युक्त्या च यथास्वं स्थानमानयेत् ।
असन्धिभग्ने रूढे तु विषमोल्बणसाधिते ॥ २५१ ॥
आपोथ्य भग्नं यमयेत्ततो भग्नवदाचरेत् ।
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ॥ २५२ ॥
पक्वमांससिरास्नायुसन्धिश्लेषं न गच्छति ।

(वाग्भटे)

शालिक्षीररसाज्याद्यैः पौष्टिकैरविदाहिभिः ॥ २५३ ॥
मात्रयोपचरेद् भग्नं सन्धिसंश्लेषकारिभिः ।
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ॥ २५४ ॥

(हंसराजे)

लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च ॥ २५५ ॥
मांसं मांसरसं क्षीरं सर्पिर्यूषं सतीनजम् ।
बृंहणं चान्नपानं च देयं भग्नाय जानता ॥ २५६ ॥

(सौश्रुते)

हैयंगवीनं सपटुप्रलिम्पे-
त्तीक्ष्णाम्लवल्कं तु तुषोदकेन ।
चिन्चास्थिमज्जरोपणकुम्भकार-
कपालपथ्यामपि भग्नदोषे ॥ २५७ ॥

(सिद्धयोगे)

वातव्याधिविनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत्।
चतुष्प्रयोगान् वल्यांश्च वस्तिकर्म च शीलयेत् ॥ २५८ ॥
अनुल्बणमनाविद्धं स्वस्थाने पर्यवस्थितम्।
अवेदनं च चेष्टायां भग्नं विद्यात्सुसाधितम् ॥ २५९ ॥

(सुश्रुते)

गन्धतैलम्।

कृष्णांस्तिलान्विरजसो दृढवस्त्रबद्धान्
सप्तक्षपा वहति वारिणि वासयेत।
संशोषयेदनुदिनं प्रविसार्य चैतान्
क्षीरे तथैव मधुकक्वथिते च तोये ॥ २६० ॥
पुनरपि पीतपयस्कांस्तान् पूर्ववदेव शोषितान् यावत्।
विगततुपानरजस्कान् सम्पूर्ण्य विचूर्णितैर्युञ्ज्यात् ॥ २६१ ॥
नलदबालकलोहितयष्टिकानखमिसिप्लवकुष्ठनलादयैः।
अगरुकुङ्कुमचन्दनशारिवासरलसर्जरसामरदारुभिः ॥ २६२ ॥
पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत्।
समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत् ॥ २६३ ॥
शैलेयरास्नांशुमतीकटीरुकालानुसारीनतपत्रलोध्रैः।
सक्षीरशुङ्गैः सपयस्कदूर्वैस्तैलं पचेत्पद्मदादिमिश्र ॥ २६४ ॥
गन्धतैलमिदमुत्तममस्थिस्थैर्यकृज्जयति चाशु विकारान्।
वातपित्तजनितानतिनीर्यान् व्यापिनोऽपि निखिलैरुपयोगैः ॥

(वाग्भटे)

एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु।
आक्षेपके पक्षपाते तालुशोषेऽर्दिते तथा ॥ २६६ ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे।
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ २६७ ॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥ २६८ ॥

मूत्रं च पलप्रतिमं सुसुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविनाशनम् ॥ २६९ ॥
राजार्हमेतत्कर्तव्यं राज्ञामेव विचक्षणैः ।

(सौश्रुते)

दग्धव्रणस्य लेपादयः ।

पयसि हन्ति हुताशनजं जपा
कुसुमवल्कभृतं तिलजं तथा ।
अपि च रोमयुतं तिलजं भृतं
सपदि केवलमेव विनिःसृतम् ॥ २७० ॥

बदरीतिलकल्काख्यकाञ्जिके [1]स्थयितोद्धृतम् ।
फेनं प्रलिम्पेद् घटजं पट्टं वाग्निकृते व्रणे ॥ २७१ ॥
सिक्थं सौवीरसंपिष्टं नन्द्यावर्ताऽग्निमेव वा ।
नवनीतेन संयुक्तं लेपयेद्दहनव्रणम् ॥ २७२ ॥
मथितेऽयन्तिसोमाख्ये कर्दमं पोट्टलीकृतम् ।
विपाच्य तेन कोष्णेन सेकः स्याद्दहनव्रणे ॥ २७३ ॥
मत्स्याक्षिसाधितं सर्पिर्दहनव्रणनाशनम् ।
शतधौताज्यलेपश्च गोजिकल्कप्रलेपनम् ॥ २७४ ॥

(सिद्धयोगे)

दलान्यामलकानां तु सूक्ष्मचूर्णानि कारयेत् ।
दग्धव्रणोपरि क्षिप्त्वा तैलेनाभ्यङ्गनं हितम् ॥ २७५ ॥
शमीपत्रशिरीषत्वक्छारिवा मधुकोत्पलम् ।
दूर्वा चातिवलोशीरे प्रदेहपरिषेचनम् ॥ २७६ ॥
दग्धव्रणहरं श्रेष्ठमग्निवीसर्पनाशनम् ॥

क्षीरिवृक्षादितैलम् ।

क्षीरिवृक्षत्वचो धात्रीचन्दनं मधुयष्टिका ॥
पूर्वा क्वाथे जपापुष्पकल्कगर्भं विपाचयेत् ॥ २७७ ॥

---

1. मथितोद्धृतम् । अ. पाठः

क्षीरमस्थ घृताचैलात् प्रस्थं च परिपाचितम् ।
तत्तैलं साधयेदग्निदग्धान् घोरव्रणानपि ॥ २७८ ॥

कार्पासदूर्वासहदेविकाक-
माचीवणश्रीखरमञ्जरीभिः ।
सहामृताचन्दनयष्टिकाभिः
सर्पिर्निपक्वं दहनव्रणघ्नम् ॥ २७९ ॥

(एतानि ग्रन्थान्तरात्)

ताम्बूलचूर्णसन्दग्धे काञ्जिकं धारयेन्मुखे ।
ताम्बूलचूर्णदग्धस्तु धारयेच्च प्रयत्नतः ॥
गण्डूषं तिलतैलस्य पुरुषः सुखवाञ्छया । २८० ॥

(चक्रदे)

इति योगरत्नसमुच्चये व्रणचिकित्साधिकार
षड्विंशति ।

अथ भगन्दरचिकित्साधिकारः ।

निदानम् ।

हस्त्यश्वपृष्ठगमनकठिनोत्कुटकासनैः ।
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ १ ॥
अनिष्टादिष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेण पिटकापूर्वो योऽङ्गुले द्व्यङ्गुलेऽपि वा ॥ २ ॥
पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ।
बस्तिमूत्राशयाभ्याशगतत्वात् स्यन्दनात्मकः ॥ ३ ॥
भगन्दरः स सर्वश्च दारुणत्वाक्रियावतः ।
भगबस्तिगुदास्तेषु दीर्यमाणेषु भूरिभिः ॥ ४ ॥
वातमूत्रशकृच्छुक्र खैः सूक्ष्मैर्वमति क्रमात् ।
दोषैः पृथग्युतैः सर्वागन्तुस्सोऽष्टधा स्मृतः ॥ ५ ॥

---

१ स्यन्दनात्मक इति मुद्रितपाठश्चहृदयपाठ

अपक्वं पिटकामाहुः पाकप्राप्तं भगन्दरम् ।
गूढमूलां ससंरम्भां रुगाढ्यां रूढकोपिनीम् ॥ ६ ॥
भगन्दरकरीं विद्यात् पिटकां नरवतोऽन्यथा ॥

(वाग्भट)

तत्र वातजा पिटका श्यावारुणा सतोदस्फुरणा । पक्वा तु शतपोनकवदणुमुखैः सफेनाच्छस्रावैः छिद्रैः क्रमाच्छीर्यते । सोऽयं शतपोनकाख्यो भगन्दरः । पित्तजा रागोष्मज्वरवती तनुरुष्ट्रग्रीवावदुच्छ्रिता सोऽयमुष्ट्रग्रीवाख्यः । कफजा महामूला पाण्डुरा कण्डूमती । पक्वा तु बहुपिच्छा परिस्राविणी । स परिस्रावाख्यः । वातपित्तजा घोररुजा सदाहोषा । पक्वायां प्राकारपरिखेव परितो गुदं परिक्षिप्य गतिर्जायते । स परिक्षेपो नाम । वातकफजा पाण्डुरा कृच्छ्रपाका पक्वायामृज्वागतया गुदो दीर्यते, सोऽयमृज्वाख्यः । कफपित्तात् पूर्वोत्थमर्शः संश्रित्य कुपिता दर्शोमूले कण्डूदाहादिमाञ्छोफः स्यात् । स शीघ्रं पक्वाभिन्नो मूलमर्शस क्लेदयन् गतिभिरजस्रं स्रवति । सोऽयमर्शोभगन्दरः । सर्वजा पादाङ्गुष्ठसमा विविधरुजा सशूलारोचकतृड्ज्वरच्छर्दिदाहा । पक्वा तु शम्बुकावर्तसन्निभा । स शम्बुकावर्तकाख्यः । मांसगृद्ध्या यत्तोऽस्थिलेशस्तिर्यङ्निर्गच्छन् गुदं यदा क्षिणोति तदा गतिः स्यात् । तत्र मांसकोथजा कृमयो गुदं खादन्तः परितो दारयन्ति । सोऽयं क्षतजो भगन्दर उन्मार्गाख्यः ।

चिकित्सा ।

षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ।
प्रवाहिणीं वलीं प्राप्तं सीवनीं वा समाश्रितम् ॥ ७ ॥
अथास्य पिटकामेव तथा यत्नादुपाचरेत् ।
शुद्ध्यसृक्स्रुतिसेकाद्यैर्यथा पाकं न गच्छति ॥ ८ ॥
पाके पुनरुपस्निग्धं स्वेदितं चावगाहतः ।
यन्त्रयित्वार्शसमिव पश्येत्सम्यग् भगन्दरम् ॥ ९ ॥
अर्वाचीनपराचीनमन्तर्मुखबहिर्मुखम् ।
अथान्तर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत् ॥ १० ॥

यदिद्रुस्रं च निश्शेषं ततः क्षारेण साधयेत् ।
अग्निना वा भिषक् साधु क्षारेणैवोष्ट्रकन्धरम् ॥ ११ ॥

(वाग्भटे)

ततो निर्वापणशोधनरोपणैर्यथाकालं साधयेत् ।

(सङ्ग्रहे)

एषां तु शस्त्रपतनाद्वेदना यदि जायते ।
वैश्वाणुतैलेनोष्णेन परिषेकः प्रशस्यते ॥ १२ ॥

(सुश्रुतादिति चक्रदत्ते)

अर्शोभगन्दरे पूर्वमर्शांसि छिन्द्यात् । ततो गत्यनुसारेण भगन्दरम् ।

भगन्दरे बहुच्छिद्रे छेदमालोच्य योजयेत् ।
आस्रावमार्गान् निश्शेषं समस्तांश्चाग्निना दहेत् ॥ १३ ॥
यतेत कोष्ठशुद्धौ च भिषक् तस्यान्तरान्तरा ।

(वृन्दे)

कल्कः कोष्णः शुण्ठीसुररिपुशयनेष्टकापुनर्नवजः ।
लेपाद् भगन्दरघ्नो वराजलेऽस्थीव वैडालम् ॥ १४ ॥

(काशीपुरवासी)

लेपो व्रणे विडालास्थित्रिफलारसकल्कितम् ॥

(वाग्भटे)

पुनर्भूवटपत्राणि गुडूची विश्वभेषजम् ।
सटङ्कारक्तकपिष्टास्तु लेपो हन्ति भगन्दरम् ॥ १५ ॥
भारग्वधनिशालाक्षाचूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्तिर्व्रणे योज्या शोधनी गतिनाशनी ॥ १६ ॥

(चिद्सारे)

तिलकुम्भवरादन्तीतुत्थसिन्धूत्थमाक्षिकम् ।
सकृष्णारोचनं कुर्यात् शोधनं मांसकृत्पुनः ॥ १७ ॥
मञ्जिष्ठासैन्धवक्षौद्रनागदन्तीत्रिवृच्चिलाः ।

(सङ्ग्रहे)

---

१. छत्र तैलेन कोष्णेन ग. पाठः.

त्रिवृत्तेजोवतीदन्तीमञ्जिष्ठारजनीद्वयम् ।
ताक्ष्यंजं निम्बपत्रं च लेपो नाडीव्रणापहः ॥ १८ ॥
(सिद्धसारे सग्रहे च)

त्रपुताम्रसीससंभवकल्कमिदं तैलमायसे पात्रे ।
घृष्टं बहुशो लिप्तं भगन्दरघ्नं तथा व्रणघ्नम् ॥ १९ ॥
(काशीपुरवासी)

ज्योतिष्मतीमलयुलाङ्गलिसेलुपाठा-
कुम्भाग्निसर्जकरवीरवचासुधार्कैः ।
अभ्यञ्जनाय विपचेत भगन्दराणां
तैलं वदन्ति परमं हितमेतदेषाम् ॥ २० ॥
(वाहटे)

घृततैलं विष्यन्दनाख्यमिति संग्रहे ।

करवीरतैलम् ।

करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः ।
मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगन्दरे ॥ २१ ॥
(सिद्धसारे)

फलत्रयाग्नित्रिवृदिन्द्रवारुणी-
शताह्वकुष्ठैः करवीरलाङ्गलैः ।
निशार्ककासीसकरञ्जसैन्धवैः
सतिन्त्रिणीबीजनिकुम्भनिम्बजैः ॥ २२ ॥
साजाजिकाङ्कोलवचाकटुत्रय
गिरीन्द्रकर्णीकटुरोहिणीयुतैः ।
सहाश्वमारैः खरपर्णिकान्वितं
महातरुक्षीरसुरदारुकान्वितैः ॥ २३ ॥
तैलं घृतं वा विपचेन्महार्ये
चक्रीकृतैस्तैर्विधिवद्विधिज्ञः ।
प्रयोजयेत्तच्च भगन्दरेषु
रुजाहरं शोधनमाशु रोपणम् ॥ २४ ॥

तदेव नाड्यर्बुददुष्टदुष्ट-
मेहव्रणघ्नं व्रणजन्तुजिच्च ॥

(सारसंग्रहे)

त्रिवृतापत्रेण कितवया ताम्बूलीनां दलेन वा ।
उपनाहक्रियां कुर्याद् भगन्दरविनाशनीम् ॥ २५ ॥

(योगरत्नाकरात्)

मधुकरोध्रकणात्रुटिरेणुकाद्विरजनीफलिनीपटुशारिवाः ।
कमलकेसरपद्मकधातकीमदनसर्जरसामयरोध्रवाः ॥ २६ ॥
सबीजपूरच्छदनैरेभिस्तैलं विपाचितम् ।
भगन्दरापचीकुष्ठमधुमेहव्रणापहम् ॥ २७ ॥

मधुतैलयुता विडङ्गसारत्रिफलामागधिकाकणाश्च लीढाः ।
कृमिकुष्ठभगन्दरप्रमेहक्षतनाडीव्रणरोपणा भवन्ति ॥ २८ ॥

अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं पिडकास्थौल्यभगन्दरान् जयेत् ॥ २९ ॥

गुग्गुलुपञ्चपलं पलिकांशा
मागधिका त्रिफला च पृथक् स्यात् ।
त्वक् त्रुटिकर्षयुतं मधुलीढं
कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ३० ॥

शृङ्गिवेररजोयुक्तं तदेव तु सुभावितम् ।
क्वाथेन दशमूलस्य विशेषाद्वातरोगजित् ॥ ३१ ॥

(वाहटे)

निर्गुण्डीवरणैरण्डचित्रकैः क्वथितं जलम् ।
ससैन्धवं तु वलाढ्यं हन्ति पञ्चभगन्दरम् ॥ ३२ ॥

(हारिचन्द्रे)

बिल्वाग्निमन्थार्तगलाचित्रकाद्यधिसृतं जलम् ।
त्रिवृत्कणायमाचूर्णयुक्तं हन्ति भगन्दरान् ॥ ३३ ॥

(गदनिग्रहे)

निशाग्निपाठानृपतीन्द्रवारुणी-
करञ्जनिम्बासनचित्रमूलकैः ।
शृतं जलं सैन्धवहिङ्गुसंयुतं
भगन्दरार्शांसि निहन्ति तत्क्षणात् ॥ ३४ ॥
पटोलशुण्ठीगिरिकर्णिकावचा-
कुष्ठरथदन्तीसुरदारुशिग्रुभिः ।
शृतं जलं सैन्धवहिङ्गुसंयुतं
भगन्दरार्शांसि निहन्ति तत्क्षणात् ॥ ३५ ॥

( योगमालायाम् )

खदिराम्बुरतो भूत्वा कषायं त्रैफलं पिबेत् ।
महिषाक्षविलिप्ताभ्यां भगन्दरहरं परम् ॥ ३६ ॥

(बिन्दुसारे)

आर्द्रकस्य रसे सिद्धं कल्के वा पाययेद् घृतम् ॥

(संग्रहे)

पिबेद्वाताधिकारोक्तं घृतं गुल्गुलुतिक्तकम् ।
योऽन्यं यक्ष्माधिकारोक्तं सप्तविंशतिगुल्गुलु ॥ ३७ ॥

(कुत्रचित्)

भगन्दरेष्वेप विशेष चक्रशेषाणि तु व्यञ्जनसाधनानि ।
व्रणाधिकाराद् परिशीलनाच्च सम्यग्निदिश्यौषधिकं विदध्यात्॥३८॥
अश्वपृष्ठगमनं चङ्क्रोधं मद्यमैथुनमजीर्णमसात्म्यम् ।
साहसानि विविधानि च रूढे वत्सरं परिहरेदभिरूंवा ॥ ३९ ॥

तत्र वातजः सतोदभेदः[1] कृष्णः स्थानात् स्थानान्तरगतिरहेतुवृद्धिहानिः। पक्वभिन्नोऽच्छमसृक् स्रवति। पित्तजः शीघ्रपाको रक्तः सदाहः स्यात्। भिन्नोऽस्रमुष्णं स्रवति। कफजः सवर्णः शीतो नीरुजो घनः। पक्वो घनपूयास्रावः। रक्तजः पित्तलिङ्गः, सिरामांसाश्रयो बहुकृमिस्रावश्च। मांसलाहारदूषितं मांसं कफग्रन्थिलिङ्गं स्निग्धं महान्तं कठिनं ग्रन्थिं कुर्यात्। मेदुराहारवृद्धं मांसे त्वचि वा वायुना नीतं मेदः स्निग्धं मृदु चलं कफलिङ्गं देहक्षयवृद्धिक्षयोदयं ग्रन्थिं कुर्यात्। स भिन्नो घनताम्रसितासितमेदःस्रावी। अस्थिभङ्गादभिघाताद्वा यदुन्नतमवनतं वास्थि सोऽस्थिग्रन्थिः। पदातेस्तु सहसा जलावगाहनाद्व्यायामतोऽन्तस्य वा[2] सरक्तं सिराजालं वायुः संपीड्य संकोच्य वक्रीकृत्य विशोष्य च निःस्फुरं नीरुजं ग्रन्थिं कुर्यात्। स सिराग्रन्थिः। व्रणेषु यथोक्तक्रियावैकल्यादङ्गेऽव्रमहते वा कुपितो वायुर्दुष्टमस्रुतमस्रं संशोष्य ग्रथितं कण्डूदाहयुतं व्रणं कुर्यात्। स नाम्ना व्रणग्रन्थिः। तत्र दोषास्रमेदोजाः पञ्च साध्याः। न तु स्थूलखराश्चला मर्मकण्ठोदरस्थाश्च॥

चिकित्सा

ग्रन्थिष्वामेषु कर्तव्या यथास्वं शोफवत् क्रिया।<br>
बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा॥ २॥<br>
स्नेहयेच्छुद्धिकामं च तीक्ष्णैः शुद्धस्य लेपनम्।<br>
संस्वेद्य बहुशो ग्रन्थिं विमृद्नीयात्पुनः पुनः॥ ३॥<br>
(वाग्भट)

अङ्कोलमधुकमातुलुङ्गहिंस्रापूतीदारुबिल्वमूलसरलकुष्ठवचावरणारग्वकालातिविषाजगन्धाभिर्लेपः। श्यामासुरदारुसमज्ञाकोशातकीसर्षपपुनर्नवैर्वा। सशोफरुक्स्तम्भे चोपनाहो यवसक्तुमधुककुष्ठशतपुष्पादेवदारुभिर्घृतयुक्तैः। (समटे)

एष वाते विशेषेण क्रमः पित्तास्रजे पुनः।<br>
जलौकसो हिमं सर्वं कफजे वातिको विधिः॥ ४॥

1. इष्णोद्गु' ग पाठः २ 'प्रतान्तस' ख ग पाठः.

निशाग्निपाठानृपतीन्द्रवारुणी-
करञ्जनिम्बासनचित्रमूलकैः ।
शृतं जलं सैन्धवहिङ्गुसयुतं
भगन्दरार्शांसि निहन्ति तत्क्षणात् ॥ ३४ ॥

पटोलशुण्ठीगिरिकर्णिकात्वचा-
कुलत्थदन्तीसुरदारुशिग्रुभिः ।
शृतं जलं सैन्धवहिङ्गुसंयुतं
भगन्दरार्शांसि निहन्ति तत्क्षणात् ॥ ३५ ॥

(योगरत्नाकरात्)

खदिराम्बुरतो भूत्वा कषायं त्रैफलं पिबेत् ।
महिषाक्षविलम्बाभ्यां भगन्दरहरं परम् ॥ ३६ ॥

(बिन्दुसारे)

आर्द्रकस्य रसे सिद्धं कल्के वा पाययेद् घृतम् ॥

(संग्रहे)

पिबेद्वाताधिकारोक्तं घृतं गुग्गुलुतिक्तकम् ।
योज्यं यक्ष्माधिकारोक्तं सप्तविंशतिगुग्गुलु ॥ ३७ ॥

(कुमारोदय)

भगन्दरेष्वेव विशेष एक्तव्येपाणि तु व्यञ्जनसाधनानि ।
व्रणाधिकारात् परिशीलनाच्च सम्यग्निरीक्ष्यौषधिकं विदध्यात्॥३८॥

अश्वपृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यम् ।
साहसानि विविधानि च रूढे वत्सरं परिहरेदधिकं वा ॥ ३९ ॥

(वाग्भटे)

इति भगन्दरचिकित्सा ॥

## ग्रन्थिनिदानम् ।

कफप्रधाना कुर्वन्ति मेदोमांसासृगा मलाः ।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात्स्मृतः ॥ १ ॥
दोषासृङ्मांसमेदोऽस्थिसिराव्रणभवा नव ।

(वाग्भटे)

ग्रन्थीनामौषधिकं तु दिवाग्रातदर्शपाट..

तत्र वातजः सतोदभेदः[1] कृष्णः स्थानात् स्थानान्तरगतिरहेतुवृद्धिहानिः । पक्वभिन्नोऽच्छमसृक् स्रवति । पित्तजः शीघ्रपाको रक्तः सदाहः स्यात् । भिन्नोऽस्रमुष्णं स्रवति । कफजः सवर्णः शीतो नीरुजो घनः । पक्वो घनपूयास्रावः । रक्तजः पित्तलिङ्गः, सिरामांसाश्रयो बहुकृमिस्रावश्च । मांसलाहारदूषितं मांसं कफग्रन्थिलिङ्गं स्निग्धं महान्तं कठिनं ग्रन्थिं कुर्यात् । मेदुराहारवृद्धं मांसे त्वचि वा वायुना नीतं मेदः स्निग्धं मृदु चलं कफलिङ्गं देहक्षयवृद्धिक्षयोदयं ग्रन्थिं कुर्यात् । स भिन्नो घनताम्रसितासितमेदःस्रावी । अस्थिभङ्गादभिघाताद्वा यदुन्नतमवनतं वास्थि सोऽस्थिग्रन्थिः । पदातेस्तु सहसा जलावगाहनाद्व्यायामतान्तस्य वा सरक्तं सिराजालं वायुः संपीड्य संकोच्य वक्रीकृत्य विशोष्य च निःस्फुरं नीरुजं ग्रन्थिं कुर्यात् । स सिराग्रन्थिः । व्रणेषु यथोक्तक्रियावैकल्यादरूढेऽसंहते वा कुपितो वायुर्दुष्टमसृतमस्रं संशोष्य ग्रथितं कण्डूदाहयुतं व्रणं कुर्यात् । स नाम्ना व्रणग्रन्थिः । तत्र दोषास्रमेदोजाः पञ्च साध्याः । न तु स्थूलखराश्चलाः मर्मकण्ठोदरस्थाश्च ॥

चिकित्सा

ग्रन्थिष्वामेषु कर्तव्या यथास्वं शोफवत् क्रिया ।
बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा ॥ २ ॥
स्नेहयेच्छुद्धिकामं च तीक्ष्णैः शुद्धस्य लेपनम् ।
संस्वेद्य बहुशो ग्रन्थिं विमृद्नीयात्पुनः पुनः ॥ ३ ॥ (वाग्भट)

अङ्कोलमधुकमातुलुङ्गहिंस्रापूतीदारुबिल्वमूलसरलकुष्ठवचावरणस्वकालाविविषाजगन्धाभिर्लेपः । श्यामासुरदारुसमङ्गाकोशातकीसर्षपपुनर्नवैर्वा । सशोफरुक्स्तम्भे चोपनाहो यवसक्तुमधुककुष्ठशतपुष्पादेवदारुभिर्घृतयुक्तैः । (संग्रहे)

एष वाते विशेषेण क्रमः पित्तासजे पुनः ।
जलौकसो हिमं सर्वं कफजे वातिको विधिः ॥ ४ ॥

1.'कृष्णोन्नदः' ग. पाठः. २ 'प्रतान्तस्य' ख. ग पाठः.

तथाप्यपक्वं छित्त्वैनं स्थिते रक्तेऽग्निना दहेत् ।
साध्वशेषं सशेषो हि पुनराप्यायते ध्रुवम् ॥ ५ ॥

(वाहटे)

वातजे ग्रन्थौ विविधाश्च वातव्याधिविहिताः स्नेहस्वेदोपनाहाः । तथानुपशमे सिराव्यधः । पक्वं तु विदार्य निरस्तपूयं कृत्वार्कादिवर्गाम्भसा प्रक्षाल्य तिलकल्केन सचित्रकसैन्धवेन लेपयेत् । कफजमन्तःशुद्धस्य भृशं स्वेदयेत्, विम्लापयेच्च ।

(संग्रहे)

दन्तीचित्रकमूलत्वक्सुधार्कपयसीगुडः ।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ॥ ६ ॥
बहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम् ।
दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ ७ ॥
मांसव्रणोद्भवौ ग्रन्थी *पाचयेदेवमेव च ।
कार्यं मेदोभवेऽप्येतत्तप्तैः फालादिभिश्च तम् ॥ ८ ॥
प्रमृज्यात्तिलदिग्धेन छन्नं द्विगुणवाससा ।
सुतप्तयाथ दर्व्या वा बहुशो जतुलिप्तया ॥ ९ ॥
शस्त्रेण पाटयित्वा वा दहेन्मेदसि सुद्धृते ॥

(वाहटे)

सुपक्वं वा विपाट्य मूत्रक्षालितं क्षौद्रसैन्धवसुवर्चिकाकाञ्चनक्षीरिहरितालमिश्रैः क्षीरवत्कषायगाढैस्तिलैरालेपयेत् । गुञ्जाद्विकरञ्जतापसवृक्षवंशावलेखमूत्रसिद्धं तैलमभ्यङ्गः । सम्यक्छुद्धं चैनं रोपयेत् ॥

(संग्रहे)

सिराग्रन्थौ नवे पेयं तैलं साहचरं तथा ।
उपनाहोऽनिलहरैर्बस्तिकर्म सिराव्यधः ॥ १० ॥

(वाहटे)

नागः किंशुकसारेण लेपो नागकृतेन तु ।
चम्पकेनोपनाहः स्याद्रात्रौ मेदःसमुत्थिते ॥ ११ ॥

(सिद्धयोगे)

* पाटयेदिति मुद्रिताष्टाङ्गहृदयपाठः । पाचयेदिति संग्रहे तालपत्रात्मके अष्टाङ्गहृदये च ।

१. 'क्षीरवत्क' इति मुद्रितसङ्ग्रहपाठः.

कैडर्यमूलं करवीरमूलं सलाङ्गलीकन्दमहौषधं च ।
वचाभया शिग्रुकमूलमेषां कल्कः स्नुहीजस्वरसेन पिष्टः ॥ १२ ॥
मेदःसमुत्थं विनिहन्ति सद्यो ग्रन्थिं तथा विद्रधिमर्बुदांश्च ।
सश्लीपदान्यालजिगण्डमालां द्वयं त्रयं चापि चतुष्टयं वा ॥ १३ ॥
सुपिष्टमेतत्सकलौषधं वा प्रलेपमात्रेण ससैन्धवं तु ।
... ... ... ... ... ... ...... वहन्ति ॥ १४ ॥
(हारिश्चन्द्रे)

स्नुह्या विदह्य पेशलपत्रमिदं मेदसा ग्रन्थौ ।
संस्वेदयेत बहुशो द्वित्रिदिनैर्द्रावयेच्चमभ्यज्य ॥ १५ ॥
(कुत्रचित्)

कुष्ठं स्तन्येन सम्पिष्टं मेदोग्रन्थिविलायनम् ॥
(काशीपुरवासी)

पुनर्नवार्काभयशिग्रुमूलकरञ्जसिन्धूत्थमहौषधानाम् ।
कल्कः प्रलिप्तः पशुमूत्रपिष्टो ग्रन्थ्यर्बुदं हन्त्यपचीं च सद्यः ॥ १६ ॥
(योगसारे)

मूलं पूतीकरञ्जस्य चित्रको लवणं सुधा ।
उपनाहः प्रधानोऽयं समस्तग्रन्थिभेदनः ॥ १७ ॥
शङ्खभस्मप्रलेपोऽयं ग्रन्थौ शस्तः सशर्करः ।
क्षीरमौदुम्बरं शस्तं शस्त्रमास्फोतजं पयः ॥ १८ ॥
प्रलेपने प्रशंसन्ति दुग्धं चोत्तमकर्णिजम् ॥
(हारिश्चन्द्रे)

समस्तमिन्द्रवल्याश्च सोपोदकयास्तथैव च ।
अनन्तायाश्च निखिलं कन्दं नीलोत्पलस्य च ॥ १९ ॥
एतानि पिष्ट्वा संस्वेद्य कदुष्णं लवणोत्तरम् ।
ग्रन्थिजातिषु सर्वासु विधेयमुपनाहनम् ॥ २० ॥
शङ्खचूर्णसमायुक्तं तैलं कंसविपाटितम् ।
ग्रन्थेरालेपनं कार्यं पच्यमानस्य दारुणम् ॥ २१ ॥
तिलमेरण्डजं बीजं शालिलाजघृतेन च ।
विधेयमुपनाहाय ग्रन्थौ भृष्टं सुचूर्णितम् ॥ २२ ॥

गोघृतं गोशकृद् भस्म वेल्लुश्च कंसमर्दितम् ।
ग्रन्थौ पाकोन्मुखे पक्के तोदहृद् भेदनं भवेत् ॥ २३ ॥
(वृन्द)

पूतिकसैन्धवजठरं धुर्धूरफलं विदग्धं मूर्छितम् ।
अथ परिपिष्टं पयसा सर्वानुन्मूलयेद् ग्रन्थीन् ॥ २४ ॥
(कुशचित)

गात्रप्रदेशे क्वचिदेव दोषाः सम्मूर्छिता मांसमभिप्रदूष्य ।
वृत्तं मृदुं मन्दरुजं महान्तमनल्पमूलं चिरवृद्धिजातम् ॥ २५ ॥
कुर्वन्ति मांसोच्छ्रयमत्यगाढं तदर्बुदं शास्त्रविदो वदन्ति ॥
(सुश्रुते)

महत्तु ग्रन्थितोऽर्बुदम् ।
तल्लक्षणं च मेदोन्तैः षोढा दोषादिभिस्तु तत् ॥ २६ ॥
प्रायो मेदःकफाढ्यत्वात् स्थिरत्वाच्च न पच्यते ।
सिरास्थं शोणितं दोषः सङ्कोच्यानुप्रपीड्य च ॥ २७ ॥
पाचयेत तदानद्धं सास्रावं मांसपिण्डितम् ।
मांसाङ्कुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ॥ २८ ॥
अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ।
तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ॥ २९ ॥
अर्बुदे ग्रन्थिवत्कुर्यात् यथास्वं सुतरां हितम् ॥
(वाग्भटे)

उपनाहादयः ।

वातार्बुदमेरण्डप्रियालनालिकेरमज्जोर्वारुककर्कारुकबीजोत्कारिकोपनाहयेत् । आनूपामिषवेशवारैर्वा । नाडीस्वेदं च कुर्यात् । मद्गुशश्चात्र शृङ्गेण रुधिरमवसेचयेत् । पित्तान्धे मृदून् स्वेदोपनाहान् कायविरेचनं च प्रयोजयेत् । शाकशाखोदुम्बरशिलापरघृष्टे च प्रियङ्गुपद्मकसंभवगाञ्जनलोध्रमधुमधुरैर्लेपः । श्लेष्मजे तुर्यमवमवहृतदोषस्य सुतरक्तस्य च वमन-

१. 'पूतिक' [illegible] २. [illegible] ३. [illegible]
४. [illegible]
५. [illegible]

विरेचनद्रव्यैः प्रलेपः। काकादनीशुकबर्हाग्निजिह्वामूलकदक्षकपोतगृध्रपुरीषकाशमूलैर्वा पलाशक्षीरपिष्टैः॥

निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमस्तुयुक्तैः।
लेपं विदध्यात् कृमयो यथात्र मूर्च्छन्ति मुञ्चन्त्यथ मक्षिका वा॥३०॥

अल्पावशिष्टे कृमिभिः कृते च
लिखेत्ततोऽग्निं विदधीत पश्चात्।
यदल्पमूलं त्रपुताम्रसीस-
पट्टैः समावेष्ट्य तदायसैर्वा॥३१॥

क्षाराग्निशस्त्राण्यसकृद्विदध्यात्
प्राणानहिंसन् भिषगप्रमत्तः॥

(पाठशुद्धौ)

लेपास्वादलोभेन च निलीयमाना मक्षिकाः समुपेक्षेत। तद्विमुक्तैः कृमिभिरितरैर्वा भक्ष्यमाणं च। ततः कृमिभक्षितावशेषं काकादिपत्रैर्विलिख्याग्निना प्रतिसारयेत्। जात्यास्फोटकरवीरपल्लवांश्च व्रणशोधनाय कल्कादौ। तैलं चात्र पाठाविडङ्गभार्ङ्गीत्रिफलाकषायसिद्धमभ्यञ्जनम्। मेदोऽर्बुदं स्विन्नभिन्नं सुशोधितमेदस्कमुपशान्तरक्तस्रावं सद्यः सीव्येत्। ततो गृहधूमलोध्रमनःशिलाहरिद्रापत्तङ्गचूर्णैर्मधुमद्भिः प्रतिसारयेत्। करञ्जतैलं चाभ्यञ्जनार्थे प्रयुञ्जीत। सर्वार्बुदानि च यथच्छया पर्यागतानि सुपरिशोधितानि रोपयेत्।

अपि च।
सशेषदोषाणि च योऽर्बुदानि
करोति तस्याशु पुनर्भवन्ति।
तस्मादशेषोद्धरणं प्रशस्तं
क्षारेण शस्त्रेण तथाग्निना वा॥३२॥

(समदे)

चित्रकं चिरिबिल्वं च मूषिकैरं पुनर्नवम्।
लाङ्गलीशिग्रुमूलं च दन्ती लवणपञ्चकम्॥३३॥
सकणामरिचं पिष्ट्वा गोमूत्रेण प्रलेपयेत्।
सर्वार्बुदानि नश्यन्ति न रोहन्ति पुनर्नृणाम्॥३४॥

दहनकुटचञ्चुप्राश्वत्थभल्लातपथ्या
त्रिकटुविषसुधार्कं व्याधिघातं हरिद्रा ।
वरणलवणशुण्ठीनिम्बपुनाटबीजं
सुरतरुगृहधूमं भूर्जिरीपं करञ्जम् ॥ ३५ ॥
कृमिजशिखिवचाभिः शिग्रुमूलेन युक्तं
पशुसलिलनिपिष्टं लेपयेल्लाभतस्तत् ।
अपहरति समस्तान्यर्बुदानि स्थिराणि
द्रुतमपचिविकारं श्लीपदं ग्रन्थिजालम् ॥ ३६ ॥
(वन्मान्तरावाक्य, श्लोकीकृतम्)

सर्वारुपथ्याकुलनालिकेर-
भियालकोलोरुकबीजचूर्णैः ।
दुग्धाम्लमूत्राज्ययुतैः प्रयुञ्ज्या-
ल्लेपोपनाहान् सकलार्बुदेषु ॥ ३७ ॥
(चिदसारे)

श्लीपदनिदानम् ।

प्रस्थिता वंक्षणोर्वादिमधःकायं कफोल्बणाः ।
दोषा मांसासृगाः पादौ कालेनाश्रित्य कुर्वते ॥ ३८ ॥
शनैः शनैर्घनं शोफं श्लीपदं तत्प्रचक्षते ।
परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ॥ ३९ ॥
रूक्षं च वातात्, पित्तात्तु पीतं दाहज्वरान्वितम् ।
कफाद् गुरुस्निग्धमरुक् चितं मांसाङ्कुरैर्बृहत् ॥ ४० ॥
तत्त्यजेद्वत्सरातीतं सुमहत्सुपरिस्रुति ।
पाणिनासौष्ठकर्णेषु वदन्त्येके तु पादवत् ॥ ४१ ॥
श्लीपदं जायते तच्च देशेऽनूपे भृशं भृशम् ।
श्लीपदेऽनिलजे विध्येत् स्निग्धस्विन्नोपनाहिते ॥ ४२ ॥

चिकित्सा ।

सिरामुपरि गुल्फस्य द्व्यङ्गुले पाययेच्च तम् ।
मासमेरण्डजं तैलं गोमूत्रेण समन्वितम् ॥ ४३ ॥

१. 'पुनाग' ग. पाठः. २. 'घनं' मुद्रितवाग्भटहृदयपाठः.

जीर्णे जीर्णान्नमश्नीयाच्छुण्ठीमृतपयोऽन्वितम् ।
त्रैवृतं वा पिबेदेवमशान्तावग्निना दहेत् ॥ ४४ ॥
(वाहटे)

वस्तिं च युञ्जीत । (सङ्ग्रहे)

गुल्फस्याधस्सिरामोक्षः पैत्ते सर्वं च पित्तजित् ।
सिरामङ्गुष्ठके विध्वा कफजे शीलयेद्यवान् ॥ ४५ ॥
(वाहटे)

सक्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत् । यथाबलं वा पिप्पलीर्वर्धमानाः* । तैलं वा पिबेद्विडङ्गार्कमरिचचित्रकशुण्ठीदेवदारुवैल्वाबालुकलवणपञ्चकैः सिद्धम् । आलेपयेच्च नागरामृताविडङ्गकटुकाभद्रदारुभिर्मूत्रपिष्टैरूरुस्तम्भोक्तैश्च भेषजैः ॥
(सङ्ग्रहे)

सक्षौद्राणि कषायाणि वर्धमानास्तथाभयाः ।
लिम्पेत्सर्षपवार्ताकीमूलाभ्यां धान्ययाथवा ॥४६ ॥
(वाहटे)

यवामृताकुलकशृङ्गिवेर-
सुरद्रुमारिष्टकमुद्गवारि ।
वराजोयुक्तमिदं निपीतं
श्लीपदमाशु हन्ति ॥ ४७ ॥
(हारिश्चन्द्रे)

शाकोटकीयं मधुना कषायं
पिबन्ति ये क्षीरभुजस्तथान्ति ।
ते श्लीपदं विद्रधिशोफगुल्म-
गुल्मादशूलानपि पाण्डुरोगान् ॥ ४८ ॥
(योगामृते)

विश्वौषधं वा क्वथितं गळोची
मूत्रं गुराहाकथितं पिबेद्वा ।

* हरीतकीर्वर्धमाना इति वाहटे, शिष्टं पूर्ववत् ।

समाक्षिकं श्लीपदरोगवान् यः
सिद्धार्थकास्तस्य हिताः प्रलेपे ॥ ४९ ॥

पिबेद्वार्धभयाकल्कं मूत्रेणान्यतमेन वा ।
पिबेत्सर्षपतैलं वा श्लीपदानां निवृत्तये ॥ ५० ॥

सर्षपविजयानागरहिङ्गुचचाशिग्रुरविमूलैः ।
दिनकरपयसा पिष्टैः श्लीपदनाशाय लेपनं कुर्यात् ॥ ५१ ॥

दिनकरमूलं पिष्ट्वा दिनकरपयसा प्रलेपयेदथवा ।
नागरसर्षपलशुनं श्लीपदनाशाय हिङ्गुयुतम् ॥ ५२ ॥
(सिद्धयोगे)

कुठेरकधिमिश्रेण मृगशृङ्गान्वितेन च ।
साज्येनालेपितं सिप्रं श्लीपदं संप्रणश्यति ॥ ५३ ॥

श्लीपदं संप्रणश्येत्तं पक्षार्धेनाधिकेन वा ।
कटुतैलप्रघृष्टेन मृगशृङ्गेन लेपितम् ॥ ५४ ॥

पिष्टैरेरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ ५५ ॥

शीतं देशं विशरणमन्नपानं च शीतलम् ।
दधि मांसानि शाकानि वर्जयेच्छ्लीपदी नरः ॥ ५६ ॥
(सिद्धसारे)

तुषपयसा गोनासाद्धतरुपनाहपानलेपाद्यैः ।
जयति तथा निःशेषमुपोदकाश्लीपदस्यार्तिम् ॥ ५७ ॥

गोमूत्रेण विपक्वः शाकोटकवृक्षवल्ककल्ककाथः ।
शमयति श्लीपदविपदं हंसपदी खल इवाविसूर्ति ॥ ५८ ॥
(काशीपुरवासी)

अपचीनिदानम् ।

मेदःस्थाः कण्ठमन्याक्षकक्षवंक्षणगा मलाः ।
सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् ॥ ५९ ॥

---

१. 'रोम्यवैः' स पाठः.

अवगाढान् बहून् गण्डांश्चिरपाकांश्च कुर्वते ।
पच्यन्तेऽल्परुजस्तेऽन्ये स्रवन्त्यन्येऽतिकण्डुराः ॥ ६० ॥
नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः ।
गण्डमालापची चेयं दूर्वेव क्षयवृद्धिभाक् ॥ ६१ ॥
तां त्यजेत् सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम् ॥
(वाग्भटे)

चिकित्सा ।

हंसपादघृतानिम्बपिप्पलीवृषकैः शृतम् ।
जलं गलजगण्डं च गण्डमालां च नाशयेत् ॥ ६२ ॥
(हारितसन्त्रे)

निम्बत्वक्वृषबृहतीरात्रिनराकुलकामृताबिम्बैः ।
क्वाथः प्रगे निपीतः ममद्गु पुरो गण्डमालाघ्नः ॥ ६३ ॥
(योगसुधाकरे)

ऊर्ध्वाधःशोधनं पेयमपक्व्यां साधितं घृतम् ।
दन्तीद्रवन्तीत्रिवृताजालिनीदेवदारुभिः ॥ ६४ ॥
शीलयेत्कफमेदोघ्नं धूमगण्डूषनावनम् ।
सिरयापहरेद्रक्तं पिबेन्मूत्रेण वार्ष्यजम् ॥ ६५ ॥
ग्रन्थीनपक्वानालिंपेत् नाकुलीपटुनागरैः ।
स्विन्नान् लवणपोट्टल्या कठिनाननु मर्दयेत् ॥ ६६ ॥
शमीमूलकशिग्रूणां बीजैः सयवसर्षपैः ।
लेपः पिष्टोऽम्लतक्रेण ग्रन्थिगण्डविलायनः ॥ ६७ ॥
पाकोन्मुखान्सुतासस्य पित्तश्लेष्महरैर्नयेत् ।
अपक्वानेव चोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥ ६८ ॥
काकादनीलाङ्गलिकानादिकोत्तुण्डकफलैः ।
जीमूतबीजकर्कोटीविशालाकृतवेधनैः ॥ ६९ ॥

पाठान्वितैः पलार्धांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥ ७० ॥

अनेन माला गण्डानां चिरजा पूयवाहिनी ।
सिध्यत्यसाध्यकल्पापि पानाभ्यञ्जननावनैः ॥ ७१ ॥

तैलं लाङ्गलिकीकन्दकल्कपादे चतुर्गुणे ।
निर्गुण्डीस्वरसे पक्वं नस्याद्यैरपचीप्रणुत् ॥ ७२ ॥

भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः ।
मनःशिलालनलदविशालाकरवीरकैः ॥ ७३ ॥

गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ।
ब्रह्मीरसार्कपयक्षीरगोशकृद्रससंयुतम् ॥ ७४ ॥

प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।
पानाद्यैः शीलितं कुष्ठं दुष्टनाडीव्रणापचीः ॥ ७५ ॥

वचादितैलम् ।

वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः ।
तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥ ७६ ॥

शरपुङ्खोद्भवं मूलं पिष्टं तण्डुलवारिणा ।
नस्याल्लेपाच्च दुष्टापचीविषजन्तुजित् ॥ ७७ ॥

मूलैरुत्तमकारिण्याः पीलुपर्ण्याः सहाचरात् ।
सलोध्राभययष्ट्याह्वशताह्वाद्वीपिदारुभिः ॥ ७८ ॥

तैलं क्षीरसमं सिद्धं नस्येऽभ्यङ्गे च पूजितम् ।
गोऽश्वजाश्वखुरा दग्धाः कटुतैलेन लेपनम् ॥ ७९ ॥

(वाग्भटे)

सौवर्चलादितैलम् ।

सौवर्चलान्यवार्शोक्षिद्दन्तीभिल्लातचित्रककल्केन सिद्धं तैलमभ्यङ्गेऽपच्यां नस्यसेयपन्नगेन वा । सनिर्गुण्डीस्वरसं वा तैलं साधितमभ्यङ्गपाननावनैः गण्डमालानाडीव्रणदुष्टानिलापचिहरम् । मां-

१. 'वाप्याः' २. 'पीलुपर्ण्याः' इति पाठान्तरम्।

श्रीसर्जरसकार्पासीमूलसैन्धवैः स्तन्यपिष्टैस्तैलं विपक्वमभ्यङ्गो व्रण-
काठिन्यघ्नः ॥ (सङ्ग्रहे)

व्योषं विडङ्गं मरिचं सैन्धवं देवदारु च ।
तैलमेभिः शृतं नस्यात्कृच्छ्रामप्यपचीं जयेत् ॥ ८० ॥
(चाक्षुषे)

गण्डमालापहं तैलं सिद्धं शाकोटकत्वचा ॥ (सिद्धसारे)

तुंबीरसेन कटुकेन चतुर्गुणेन
कल्कीकृतैर्मरिचमागधिकौषधैश्च ।
तैलं शृतं हरति श्लीपदगण्डमाला-
ग्रन्थ्यर्बुदानपि गले गलगण्डरोगान् ॥ ८१ ॥
(चिकित्साकलिकातः)

कृतमालकपूतीककुटजातिविषाविषैः ।
क्षारैस्त्रिकटुकैः सिद्धं सर्पिः स्यादपचीहरम् ॥ ८२ ॥
(सद्यमाने)

स्नुह्यर्कदुग्धपिष्टनागरपद्माम्लिकाग्निबकुलास्थि ।
अपचीनाशनमुदितं यथा शक्रस्य गोऽश्वतैलेन ॥ ८३ ॥
खदिराग्निदग्धदक्षिणगोशृङ्गमषीसमाप्लुतं तैलम् ।
नाशयति द्रागपचीं विधिरिव विमुखो नृणां यत्नम् ॥ ८४ ॥
(काञ्चीपुरवासी)

स्नुह्यर्कदुग्धलवणं प्रदिहेदपच्यां
बिम्बाम्लिकाग्निबकुलास्थि तथैव लिंपेत् ।
निर्गुण्डिकादलरसेषु हलेन सिद्ध-
मभ्यंजन विलयं तु विनाशनं स्यात् ॥ ८५ ॥
(योगामृते)

पूतीकलशौषधसिन्दुवाररसोनरक्षोघ्नपट्वग्निकार्कैः ।
स्नुहीदलाद्भिः सह लेपयेच्चद्द्रुतं निहन्याद्
गलगण्डमालाम् ॥ ८६ ॥
(सिद्धयोगे)

---

१. 'पच.' मुद्रितसङ्ग्रहपाठः. २. 'मधुरै' ग पाठः

वरणार्कगळामण्डवाजिगन्धामरद्रुमैः ।
जीमूतरससंपिष्टैर्लेपोऽयं गण्डमालनुत् ॥ ८७ ॥
(हारिचन्द्रे)

क्षुण्णानि निम्बपत्राणि तत्रैभल्लातकैः सह ।
शरावसंपुटे दग्ध्वा सह सिद्धार्थकैः समैः ॥ ८८ ॥

पिष्ट्वा तु च्छागमूत्रेण गण्डमालां प्रलेपयेत् ।
सर्षपाः शिग्रुमूलानि शणबीजातसीयवाः ॥ ८९ ॥

मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ।
गण्डानि ग्रन्थयश्चैव गण्डमालासमुत्थिताः ॥ ९० ॥

आलेपोत्तेन शाम्यन्ति विलयं यान्ति चाशु ते ॥

कुक्कुटविट्फलमग्निसमानं स्नुक्पयसा सह पेष्यमथैतत् ।
एष विलेपविधिः पुरुषाणां द्रागपचीमखिलामपहन्ति ॥ ९१ ॥
(तन्त्रान्तरे)

आरग्वधशिफा क्षिप्रं सम्यक्तण्डुलवारिणा ।
पिष्ट्वा नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥ ९२ ॥

फले द्वे त्रीणि वा प्रातः निनिक्षिप्य दिनत्रयम् ।
पिबेदलंबुषरसं गण्डमालारुजापहम् ॥ ९३ ॥
(चन्द्रटे)

पाययेदभयारिष्टं गण्डीरारिष्टमेव वा ।
पिप्पलीवर्द्धमानं वा गण्डमालासु योजयेत् ॥ ९४ ॥
(भेडाद्)

इत्यशान्तौ गदस्यान्यपार्श्वजंघासमाश्रितम् ।
वस्तेरूर्ध्वमधस्ताद्वा मेदो दग्ध्वाग्निना दहेत् ॥ ९५ ॥

पार्ष्णि प्रति द्वादश चांगुलानि
मुक्त्वेन्द्रबस्तिश्च गदान्यपार्श्वे ।
विदार्य मत्स्याण्डनिभानि मध्या-
ज्जालानि कर्षेदिति सुश्रुतोक्तिः ॥ ९६ ॥

आगुल्फकर्णात् सुमितस्य जन्तो-
स्तस्याष्टमांशं मुखतोऽभिमुच्य ।

क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ।
मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत् ॥ २३४ ॥

वचाद्यमगदम् ।

वचाहिङ्गुविलङ्गानि सैन्धवं गजपिप्पली ।
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ॥ २३५ ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् । (काश्ये)

कीटेषु मन्दं नात्युष्णं बहुवातकफं विषम् ॥ २३६ ॥
अतः कीटविषे चापि स्वेदो न प्रतिषिध्यते ।
क्षारवचानतहिङ्गुव्योषगदसिन्धुनीलिकाम्बष्ठाः ॥ २३७ ॥
सातिविषा कीटविषं घ्नन्ति त्रिवृदञ्जनादसर्पीषि । (प्रयोग०)

कीटघ्नं तुलसीमूलं पीतं ज्येष्ठाम्बुकल्कितम् ॥ २३८ ॥
रजनीद्वयमञ्जिष्ठापत्रङ्गगजकेसरैः ।
शीताम्बुपिष्टैरालेपः सर्वकीटविषं हरेत् ॥ २३९ ॥ (अमृतधा)

त्वक्पत्रपुष्पाणि फलं समूलं क्वाथः शिरीषारिककुभगाढः ।
क्षौद्रेण युक्तो लवणश्च वर्गो विशेषतः कीटविषं निहन्ति ॥ २४० ॥ (सौश्रुताः)

वृश्चिकविषलक्षणम् ।

वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।
ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ २४१ ॥
दंशः सद्योऽतिरुक्श्यावस्तुद्यते स्फुरतीव च ।
ते त्रिविधा मन्दविषा मध्यविषा महाविषा इति । तत्र —
मन्दाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥ २४२ ॥
रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ।
मध्याः त्रिवर्णा धूम्रोदराः । कपिलारुणाः विचित्राः [illegible]
चित्राः शोणिताभा । महाविषाः

अग्न्याभा ह्येकपर्वाणः रक्तासितासितोदराः ॥ २४३ ॥

तैर्महाविषैर्दष्टः शूनजिह्वः सज्वरः खैः शोणितं वमन् स्विद्यन् मूर्च्छन् शुष्कास्यः प्रायो जीवितं विजहाति ।

चिकित्सा ।

सद्यो वृश्चिकदंशं च चक्रतैलेन सेचयेत् ।
विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥ २४४ ॥
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ २४५ ॥
उपनाहो घृते भृष्टः कल्कोऽजाज्यास्ससैन्धवः ।
आर्दशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ २४६ ॥
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ।
मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ २४७ ॥
लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽथवा ।
पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ॥ २४८ ॥
पारावतशकृत्पथ्या तगरं विश्वभेषजम् ।
बीजपूररसोन्मिश्रं पत्रं वृश्चिकागदः ॥ २४९ ॥
सर्वैवलोप्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् ।
हिङ्गुना हरितालेन मातुलुङ्गरसेन वा ॥ २५० ॥
लेपाञ्जनाभ्यां गुलिका परमं वृश्चिकापहा ।
करञ्जार्जुनशेलूनां कटभ्याः कुटजस्य च ॥ २५१ ॥
शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ।
यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ २५२ ॥
तस्य पथ्या निशा कृष्णा मञ्जिष्ठातिविषोषणम् ।
सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपयेत् ॥ २५३ ॥
सर्वत्र चोग्रालिविषे पाययेद्दधिसर्पिषी ।
विध्येत्सिरां विदध्याच्च वमनाञ्जननावनम् ॥ २५४ ॥
उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ।
नागरं गृहकपोतपुरीषं बीजपूरकरसो हरितालम् ॥ २५५ ॥

सैन्धवं च विनिहन्त्यगदोऽयं लेपतोऽलिकुलजं विषमाशु ।
नागपुरीपञ्चत्रं रोहितमूलं च शेलुतोयेन ॥ २५६ ॥

कुर्याद् गुलिकां लेपादियमलिविषनाशिनी श्रेष्ठा ।
अर्कस्य दुग्धेन शिरीषबीजं त्रिर्भावितं पिप्पलिचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीटभुजङ्गलूतोन्दुरवृश्चिकानाम् ॥
(वाग्भटे)

कालया सह संयुक्तं श्रवणान्तर्मलं बुधः ।
दंशे करेण संघृष्य लिम्पेद् वृश्चिकहानये ॥ २५८ ॥

कराभ्यां नक्तमालस्य दलं पिष्ट्वा विचक्षणः ।
विद्धप्रदेशे घर्षणात् सद्यो वृश्चिकनाशनम् ॥ २५९ ॥
(अमृतधा)

शिरीषकुष्ठकुटपिष्टानि सैन्धवं तैलमेव च ।
धूपे घ्नन्ति प्रयुक्तानि कीटवृश्चिकजं विषम् ॥ २६० ॥
वृश्चिकेषूच्चिटिङ्गेषु तथा शतपदीषु च ।
उष्णो विधिर्हितः प्रोक्तः शीतस्त्वन्यत्र भूयसा ॥ २६१ ॥
पलाशबीजोर्ध्वपयःप्रपिष्टः प्रलेपने कुण्डलिपत्रतीक्ष्णम् ।
तथैव जातीदलहिङ्गुहिन्धूशिलैषध गोमयवारिपिष्टम् ॥
(सिद्धयोगसमुच्चये)

नागवल्लीदलरसं रामठेन समन्वितम् ।
दंशे नरेण संपिष्य लिम्पेद् वृश्चिकहानये ॥ २६३ ॥
स्नुक्क्षीरपिष्टसिक्थेन स्पृष्ट्वा वृश्चिकजं जयेत् ।
(अमृतधा-)

कार्पासस्य दलैः सम्यग् लेपयेच्छूलक्ष्णपेषितैः ।
दंशं वृश्चिकदष्टस्य शमार्थं घृतमिश्रितैः ॥ २६४ ॥
अर्कक्षीरेण संपिष्टा शिरीषदलमिश्रिता ।
उपकुल्या विषं हन्याद् वृश्चिकस्य प्रलेपनात् ॥ २६५ ॥
नागरं वारिणा घृष्टं नराणां नस्यकर्मणि ।
विषं वृश्चिकदष्टानां हरेदेषप्रभावतः ॥ २६६ ॥
(बिन्दुसारे)

मक्षिकादंशे तगरादिप्रयोगः

तगरं नागरं नागकेसरं मरिचानि च ।
प्रयुक्तं पानलेपाभ्यां मक्षिकाविषनाशनम् ॥ २७८ ॥
(संग्रहे)

यवपुष्पासमायुक्तं सैन्धवं परिपेषितम् ।
सघृतं लेपनं दद्यान्माक्षिकाविषनाशनम् ॥ २७९ ॥

स्वक्षीरपरिपिष्टेन बीजेन परिलेपितम् ।
शिरीषस्य प्रयात्यस्तं विषं दर्दुरजं क्षणात् ॥ २८० ॥
(बिन्दुसारे)

सितासिते च लवणे मरिचं च सनागरम् ।
फणिज्झकरसोपेतं मराटीनां विषापहम् ॥ २८१ ॥

मात्स्यो दंशः सकण्डूदाहः प्राणेवोक्तो जलूकसाम् ।
(संग्रहे)

सक्तुभिः पटुतैलाक्तैः मक्षैर्धूपनं हितम् ॥ २८२ ॥
अङ्कोलपत्रधूपो वा तस्य दंशोद्भवे विषे ।
(बिन्दुसारे)

जलबिन्दुनिभैः स्फोटैर्दाहकण्डूरुजान्वितैः ॥ २८३ ॥
येषु यत्रं दशतेऽस्पर्शे तं विद्यादथमूत्रितम् ।
(संग्रहे)

लूतोत्पत्तिप्रकारः ।

विश्वामित्राय क्रुद्धस्य वसिष्ठस्य ललाटजाः ॥ २८४ ॥
स्वेदलेशाः स्मृता लूता लूने ये पतितास्तृणे ।
खाण्डवे दह्यमानानामसुराणां शरीरतः ॥ ८५ ॥
ये स्फुलिङ्गा विनिश्चेरुस्ते लूता इति केचन ।
तीक्ष्णमध्यावरत्वेन घ्नन्ति ताश्चाचिकित्सिताः ॥ २८६ ॥
सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ।

लूतासामान्यलक्षणम् ।

दंशः सामान्यतस्तासां दद्रुमण्डलसन्निभः ॥ २८७ ॥

1. 'श्लोक संख्या ८५' मुद्रितपाठः

कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसंश्रितम् ।
प्रसृतं सर्वतो दंशं न छिन्दीत दहेन्न च ॥ ३०० ॥

लेपयेद् दग्धमगदैर्मधुसैन्धवसंयुतैः ।
सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ॥ ३०१ ॥

सर्वतोऽपहरेद्रक्तं शृङ्गाद्यैस्सिरयापि वा ।
स्रुते रक्ते परीषेको घृतक्षीरादिभिर्हितः ॥ ३०२ ॥

स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ॥
विषस्य वृद्धये तैलमग्नेरिव तृणोलपम् ॥ ३०३ ॥
(सङ्ग्रहे)

पद्मकशीतोशीरं नतपाटलमेलुशारिवातोयम् ।
निर्गुण्डीगदयुक्तं लूताविषं हन्ति पानाद्यैः ॥ ३०४ ॥
(सिद्धयोगे)

नागवल्लीदलरसो दूर्वारससमन्वितः ।
प्रलेपात् कीटलूतानां वृश्चिकानां विषापहः ॥ ३०५ ॥
(भद्रतपा-)

कपित्थं पाटलीमेलु शिरीषं द्वौ पुनर्नवौ ।
द्वे श्वेते व्यागदः सर्वलूताविषहरो गणः ॥ ३०६ ॥
(सिद्धसारे)

रामठं हरिगोपश्च मधुगोमूत्रयोजितम् ।
सर्पलूतादिगरलं हन्ति कीटेषु योजयेत् ॥ ३०७ ॥

अङ्कोलो वा समूलं वा सविष्योत्तमकर्णिकाम् ।
काञ्जिकैर्नस्यपानाद्यैर्व्याळलूतादिकीटजित् ॥ ३०८ ॥

पुष्पं दलं फलं वल्कं मूलं चैव शिरीषजम् ।
योगोऽयं कीटलूतादिविषध्वान्तस्य भास्करः ॥ ३०९ ॥
(चपूत-)

लोध्रसैन्धवकुष्ठैस्तु जातीमुकुलयोजितैः ।
सक्षौद्रैर्मरिचैर्हस्तो लेपो लूताविषापहः ॥ ३१० ॥
(बिन्दुसारे)

चन्दनं पद्मकं कुष्ठं नताम्बूशीरपाटलाः ।
निर्गुण्डीशारिवासेलु लूताविषहरोऽगदः ॥ ३११ ॥
(सिद्धसारे)

काकमाचीदलं मूलं सुरसस्य तथैव च ।
जातीपल्लवकं चैव नीलं ज्योतिस्तिलं तथा ॥ ३१२ ॥
ईश्वरी शारिवा चेति लूतानां विषनाशनम् ।
(हारिते)

कटभीमूलतगरसमङ्गादेवदारुभिः ॥ ३१३ ॥
घृतहीह्यगाङ्गेयीरोचनाचन्दनैर्घृतम् ।
सिद्धं चतुर्गुणे क्षीरे पानाभ्यञ्जनयोर्हितम् ॥ ३१४ ॥
लूताकणभकीटानां विषे परमदारुणे ।
(सङ्ग्रहे)

पिटका विविधाकारा मण्डलानि भवन्ति च ॥ ३१५ ॥
शोफा भवन्ति मृदवो रक्ता श्यावाश्चलास्तथा ।
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ॥ ३१६ ॥

मूषिकाविषविशिष्टलक्षणम् ।

अष्टादशविधा मूषिकाः लालनाश्चपला इत्यादयः ।

यस्मिन्नङ्गे पतन्त्येषां शुक्रमङ्गैः स्पृशन्ति वा ।
यच्छुक्रदिग्धैस्तत्रास्रे दूषिते पाण्डुतां गते ॥ ३१७ ॥
ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोऽरुचिः ।
शीतज्वरोऽतिरुक् सादो वेपथुः पर्वभेदनम् ॥ ३१८ ॥
रोमहर्षः सुनिर्मूर्च्छा दीर्घकालानुबन्धनम् ।
श्लेष्मानुविद्धबहुलासुपोतकच्छर्दनं सतृट् ॥ ३१९ ॥
व्यधास्यास्तुनिषं कृच्छ्रं भूयो भूयश्च कुप्यति ।
घ्नन्वस्ति विनर्णाम्रमारुतार्भैर्ग्रन्थिभिश्चितम् ॥ ३२० ॥
छुच्छुन्दरीसगन्धं च वर्जयेदाखुदूषितम् ।
मूर्च्छा मशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ ३२१ ॥

१. 'शक्र', २. 'छुच्छुन्दर', ३. 'मूर्च्छाङ्गशोफ' मुद्रितपुस्तकपाठः ।

शिरोगुरुत्वं लालास्रुक्छर्दिश्वासाश्च लक्षणम् । (संग्रहे)

मूषिकविषचिकित्सा ।

कपित्थपत्रसंसिद्धः कषायस्तैलसंयुतः ॥ ३२२ ॥
निहन्त्याखुविषं तस्मात्कपित्थः सर्वदा हितः ।
आस्फोतमूलसिद्धं वा पक्वकापित्थमेव वा ॥ ३२३ ॥
(ग्रन्थान्तरे)

सिन्दुवारं नतं शिग्रु बिल्वमूलं पुनर्नवम् ।
वचाश्वगुनजीमूतमेषां क्वाथं समाक्षिकम् ॥ ३२४ ॥
पिबेच्छाल्योदनं दध्ना भुञ्जानो मूषिकार्दितः ।
आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ॥ ३२५ ॥
दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकान्यथा ।
दष्टं विस्रावयेद्दंशं प्रच्छितञ्च प्रलेपयेत् ॥ ३२६ ॥
(संग्रहे)

शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ।
अगारधूममञ्जिष्ठारजनीलवणोत्तमैः ॥ ३२७ ॥
लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ।
छर्दयेन्नीलिकाक्वाथैः शुकाख्याङ्कोलयोरपि ॥ ३२८ ॥
वचामदनजीमूतकुष्ठमूत्रेण पाययेत् ।
विरेचनं त्रिवृन्नीलीत्रिफलाकल्क इष्यते ॥ ३२९ ॥
अञ्जनं गोमयरसो व्योषयुक्स्वरजोऽन्वितः ।
तण्डुलीयकमूलेन सिद्धं पाने घृतं हितम् ॥ ३३० ॥
(वाग्भटे)

पाने मार्कवमूलं सक्षौद्रं तण्डुलाम्बुना ।
पयसा वाखुदष्टस्य पिष्टा तिलककर्णकी ॥ ३३१ ॥
भक्षिते मूषिकविषार्तिन्मार्जारस्यास्थि सकपित्थम् ।
सिद्धं तैलं दशगुणदुग्धे तच्च नस्याद्यैः ॥ ३३२ ॥
([illegible]

१ '[illegible]' पुस्तकपाठः

कपित्थोत्थितवन्दाकं सौवीरेणैव पाययेत् ।
अष्टादशविधान् घोरान् नाशयेन्मूषिकानिदम् ॥ ३३३ ॥
मूषिकाणां विषक्षेपे नखुभिः किं विकत्थनैः ।
शिरीषरससंयुक्तैर्मत्कुणैर्नस्यमुत्तमम् ॥ ३३४ ॥
फलानि कृष्णरम्भाया मत्कुणैः सह भक्षयेत् ।
(जम्बूलता)
कार्पासपत्रस्य रसस्तैलेन तु समन्वितम् ॥ ३३५ ॥
एष मूषिकदष्टानां पानेन विषनाशनः ।
तण्डुलीयकमूलं तु लिह्यात्तत्र समाक्षिकम् ॥ ३३६ ॥
शिरीषफलकल्कं वा लिह्यादाखुविषापहम् ।
(अमृताष्टमी)
उन्मत्तस्य फलं मृष्टं गोघृतेनैव भक्षयेत् ॥ ३३७ ॥
आखुदंशापरवशो विषं तेनैव नश्यति ।
(अमृतधा)
मेघनादस्य मूलं च मूलं पौनर्नवं तथा ॥ ३३८ ॥
नीलीमूलं च गोक्षीरपीतमाखुविषापहम् ।
पथ्याचूर्णं गुल्युतं धूपमाखुविषे हितम् ॥ ३३९ ॥
मूषिकार्तं नरं नित्यं तक्रेणैव तु भोजयेत् ।
करञ्जस्य त्वचं चूर्णं घृतेनाखुविषापहम् ॥ ३४० ॥
सुखोदकेन वा पीतं पथ्यानागरमैन्धवम् ।
(तन्त्रान्तरे)
तगरस्वरसनिघृष्टं चैलाढ्यं रीकसं नसा पीतम् ॥ ३४१ ॥
मूषिकविषं द्रवन्तीकन्दविलेपीव नाशयति ।
प्रातः पीतः ककुभक्वाथो हन्त्याशु *दूषगरलम् ॥ ३४२ ॥
नस्यं यथा सतैलैरमिकरसानिन्दुभिर्विहितैः ।
सितगदमधूकवल्कप्रमागधिकाहरितमञ्जरीमूलैः ॥ ३४३ ॥
पयसा पानालेपो विषमिव विहगाधिहन्ति दवदहनः ।

---

* दूषस्य—मूषिकस्य ।

एरण्डबीजतिलगुलगुलिकागरलं चूषस्य नाशयति ॥ ३४४ ॥
चिञ्चीनागरखण्डस्वरसो वा प्रातरुपयुक्तः ।
कृष्णं तण्डुलमेकं सलिले निष्पीड्य नालिकेरस्य ॥ ३४५ ॥
तक्रेण पिबेज्जरसीमूलं वा मूषिकार्तिघ्नम् । (का०-चीदुरगमी)
भूनागचूर्णं पयसा पाययेन्मूषिकापहम् ॥ ३४६ ॥
मत्कुणांश्चतुरो रम्भाफले निक्षिप्य भक्षयेत् । (वृन्द) ,२
तक्रेण शरपुङ्खाया बीजं सञ्चूर्ण्य वा पिबेत् ॥ ३४७ ॥
अङ्कोलमूलकल्को वा बस्तमूत्रेण कल्कितः ।
पानालेपनयोर्युक्तं सर्वाखुविषनाशनम् ॥ ३४८ ॥ (चरक)
पचो प्रातः प्रयत्नेन पथ्याशी तण्डुलाम्बुना ।
पिबेदाखुविषार्तिघ्नं त्र्यहं सप्ताहमेव वा ॥ ३४९ ॥
कपित्थदलनिर्यासं पथ्याशी मधुमिश्रितम् ।
पिबेदाखुविषार्तस्तु पुरुषः सुखवाञ्छया ॥ ३५० ॥
एवमेव हरेत्क्षिप्रं मूषिकस्य विषं क्षणात् ।
बिलालमांसलेपेन भक्षणेन च देहिनाम् ॥ ३५१ ॥ (चि कुमार)

तैलम् ।

विश्वालूतासुकीटोन्दुरविषविकृतीः साग्निर्नालीद्विरात्रं
हिङ्गुव्योषाग्निगन्धालशुनपटुवचाटङ्कणक्षारकल्कैः ।
निर्गुण्डीकाकमाचीस्नुक्तदिनकृत्कालिनीवारि पञ्च-
प्रस्थे तैलस्य सिद्धं हरति समपयः प्रस्थमस्यञ्जनेन ॥ ३५२ ॥
(त०-आ ताराशाय फोर्दीकृतम्)

सपिं ।

मूल्यकोलर्दगोजीनृपतरुकुटजव्याघ्रिकानक्तमाल-
क्वाथे नीलीकपित्थत्रिकटुकरजनीरोहिणीकल्कमिद्धम् ।
सर्पिर्दुग्धेन दध्ना सममपि च रसे काकमाच्यास्तु नाशा-
दन्या तन्मूककरं शमयति सद्यो मूषिकाणां विषं तत् ॥ ३५३ ॥

कपित्थपञ्चाङ्गम् ।

भार्गीवल्कफषायः कपित्थवल्कोन्वितस्तथा ।
भूमिकवियजित्सर्पिः कपित्थपञ्चाङ्गसंसिद्धम् ॥ ३५४ ॥

(सहयवर्धे)

शिरीषपञ्चाङ्गम् ।

शिरीषपञ्चाङ्गद्वादशपलं द्वादशपलमस्यतोये पादावशेषपलद्वाथे द्वादशप्रस्थदुग्धनीलीदलकल्कमाम्रफलप्रमाणं नागवल्लीरसोमर्दनमूर्च्छितपारदनिष्कपादं चालोड्य तैलप्रस्थं विपक्वं पानापद्मादिभिराखुविषं हन्ति ॥

(वृद्ध०)

शुना दष्टस्य लक्षणम् ।

शुनः श्लेष्मोल्बणा दोषास्संज्ञां संज्ञावहाश्रिताः ।
मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ॥ ३५५ ॥
लालावानन्धबधिरः सर्वतः सोऽभिधावति ।
स्रस्तपुच्छहनुस्कन्धशिरो दुःखी नतानतः ॥ ३५६ ॥
दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ।
हृच्छिरोरुग्ज्वरस्तम्भतृष्णामूर्च्छोद्भवोऽनु च ॥ ३५७ ॥

व्यालादिदष्टस्य लक्षणम् ।

अनेनान्येऽपि बोद्धव्या व्यालदंष्ट्राप्रहारिणः ।
सृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः ॥ ३५८ ॥
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ।
विदाहरागरुक्पाकशोफग्रन्थिविकुञ्चनम् ॥ ३५९ ॥
दंशावदरणं स्फोटाः कर्णिकामण्डलानि च ।
सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे ॥ ३६० ॥

असाध्यलक्षणम् ।

दष्टो येन तु तच्चेष्टारुतं कुर्वन्विनश्यति ।
पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥ ३६१ ॥
जलदर्शनसंस्पर्शशब्देभ्यो यश्च सन्त्रसेत् ।
अदष्टमपि तं प्राज्ञजलसन्त्रासरोगिणम् ॥ ३६२ ॥

स्थलकर्कटविषचिकित्सा ।

दंशं स्थलकर्कदष्टस्य दग्धमुष्णेन सर्पिषा ।
मदिराद्यन्तैस्तैस्तैः पुराणं च घृतं पिबेत् ॥ ३६३ ॥
व्रणस्योपरि निष्पीड्यः प्रत्यक्पुष्पीरसोऽथवा ।
तिलगुञ्जुलदूर्वाणां दाडिमस्य गुडस्य च ॥ ३६४ ॥
कल्को मुहुर्मुहुर्लेपः श्वदंशविषमित्यरम् ।
मातुलुङ्गञ्चकर्दैर्दंशं बध्नीयादन्नाचर्चितैः ॥ ३६५ ॥
अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनम् ।
जलवेतसपत्रत्वङ्मूलं क्षुण्णं पचेज्जले ॥ ३६६ ॥
सकाथः शीतलः पीतः परं श्वविषभेषजम् ।
हरिद्रं च घृतं पानेनस्याभ्यञ्जनलेपनम् ॥ ३६७
जलत्रासे समस्ते च विषे तद्वदुदोरमम् ।
(मद्यसे)
अर्कक्षीरं तिलास्तैलं पललं च गुडं समम् ॥ ३६८ ॥
पानं जयति दुर्वारं तूर्णं कुक्कुरजं विषम् ।
(पिंढ्याले)
अङ्कोलोत्तरमूलाम्बु त्रिपलं सद्यविषापहम् ॥ ३६९ ॥
पिबेत्सधत्तूरफलां श्वेता चापि पुनर्नवाम् ।
अङ्कोलोत्तरदिङ्मूलं क्षीरेण सह पाययेत् ॥ ३७० ॥
पौराणमप्यलर्काणां विषं सद्यो निनश्यति ।
(अगस्ता)
तन्मस्तमूलेन फलेन चापि पयः पिबेत्कुक्कुरजे विषे च ॥३७१॥

मार्जारविषस्य चिकित्सा ।

निम्बं कुटजबीजानि चन्दनाञ्जनमम्बुजम् ।
क्षीरपिष्टं निहन्त्याशु श्वमार्जारविषं क्षणात् ॥ ३७२ ॥
पञ्च जीमूतकाङ्गानि तद्रसेनैव पेषयेत् ।
पुनर्गोमूत्रयुक्तोऽयमगदो मदरोपम ॥ ३७३ ॥

१ 'मदतान्तैः प्रयोजयेत्. २ तत्यार्थर च पठ

मर्कटे च सृगालेऽपि भुजङ्गे मूषिकेषु च ।
पानाभ्यञ्जननस्येषु दातव्यो विषनाशनः ॥ ३७४ ॥
(प्रयोगमित्रे)

अश्वगन्धादि घृतम् ।

अश्वगन्धाकषायेण पञ्चमूलस्य चाम्भसि ।
क्षीरद्विगुणिते सर्पिः साधयेत्सूक्ष्मकल्कितैः ॥ ३७५ ॥
अश्वगन्धासहाकुष्ठकूटरजनीद्वयैः ।
विदारिनतकट्वङ्गपद्मकस्पृक्सिन्दुवारकैः ॥ ३७६ ॥
सर्पगन्धानखाभीरुशर्करारक्तचन्दनैः ।
दंष्ट्रोपद्रवान् सर्वान् पानाभ्यङ्गैर्निहन्ति तत् ॥ ३७७ ॥

नखदन्तविषापहो लेपः ।

चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम् ।
श्वयुने पच्यते रागज्वरस्रावरुजान्वितम् ॥ ३७८ ॥
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ ३७९ ॥
(संग्रहे)

मञ्जिष्ठाचन्दनोशीरधान्यकैः परिपेषितः ।
सघृतैर्लेपनं दद्यान्नखदन्तविषापहम् ॥ ३८० ॥
(बिन्दुसारे)

निशादार्वीगैरिकाणां लेपः स्यान्नखदन्तजे ।
विषे गोजिह्विका वा स्यात् पिष्टा क्षौद्रसमन्विता ॥ ३८१ ॥
(चन्द्रटे)

सर्पविषापहारकतैलम् ।

नीलीधुर्धूरतुलसीनिर्गुण्डी किंशुकं निशा ।
अश्वगन्धा कारवल्ली स्नुग्द्वयं सर्पगन्धिका ॥ ३८२ ॥
अजानिम्बहस्तिकर्णी सपुरः शाकमाचिका ।
करञ्जलशुनागस्तिवरणं वनशिग्रिका ॥ ३८३ ॥
अपामार्गाश्वपृथुकवचाकोशातकीगर्णिनाः ।
नागवल्ली तक्कूपी चाणारल्लकविल्वकम् ॥ ३८४ ॥

देवदाली विषघ्नी च पत्राण्येषां पृथक् पृथक् ।
संक्षुद्य तेषां स्वरसे नरमूत्रेण संयुते ॥ ३८५ ॥

पिष्टैः त्रिगन्धत्रिफलालशुनव्योषहिङ्गुभिः ।
नीलीगुञ्जाफलवचावर्षाभूगिरिकर्णिभिः ॥ ३८६ ॥

महाकालाश्वगन्धार्कमूलैस्तैलं विपाचयेत् ।
तत्स्यात् नस्यपानाद्यैः सर्वसर्पविषापहम् ॥ ३८७ ॥

अष्टादशविषं हन्ति मूषिकाणां विषं क्षणात् ।
कीटलूताविषहरं आत्रेयानुमतं शुभम् ॥ ३८८ ॥
(सप्ताम्ब

अमृततैलम् ।

नीलीमूलं मधूकस्य फलं चर्म च पाचयेत् ।
तत्क्वाथे कल्कितं युञ्ज्यादजाक्षीरेण भेषजम् ॥ ३८९

मधूकास्थि करञ्जस्य मञ्जुलस्य तथास्थि च ।
घराव्योषमपामार्गं श्वेतां च गिरिकर्णिकाम् ॥ ३९० ।

वारुणीमिन्द्रसाह्वां च शारिबालोध्रसर्षपम् ।
किंशुकास्थि वृश्चन्तीमुसलीकुष्ठचन्दनम् ॥ ३९१ ॥

कार्पासबीजलशुननिर्गुण्डीमूलधान्यकम् ।
यष्टीमधुकनिम्बत्वगञ्जनं यवसंयुतम् ॥ ३९२ ॥

तैलप्रस्थं पचेत्तत्र शनैर्मृद्वग्निना भिषक् ।
एतत्तैलं महावीर्यं नस्याभ्यञ्जनादिभिर्हरेत् ॥ ३९३ ॥

दर्वीकृतां मण्डलिनां राजिलानां तथा विषम् ।
कीटलूतोन्दुरुविषं विशेषाद्वृश्चिकोद्भवम् ॥ ३९४ ॥

अमृतं नाम विख्यातं मृतसञ्जीवनं परम् ।

सर्पादिदंशमन्त्रनैषधम् ।

ईश्वरी कदली नाग्नी चन्द्री श्वेती घनस्तनी ॥ ३९५

निर्गुण्डी नाकुली सर्पगिरिकर्णी च गारुडी ।
शुण्ठीमरिचपाठाश्च रामठं कटुरोहिणी ॥ ३९६ ॥

कुस्तितार्जुनत्वौ चैव शिरीषमूलं च वल्कलम् ।
एतानि समभागानि कल्कार्थे विनियोजयेत् ॥ ३९७ ॥

ईश्वरी कदली नागी चन्द्री श्वेता घनस्तनी ।
नीलीनिर्गुण्डिका चैषां सुधः स्वतपर्के हरेत् ॥ ३९८ ॥

तलस्रावे विषकल्क्यं चतुर्भागावशेषितम् ।
शस्त्रपात्रे परिराव्य कल्कमत्र प्रदापयेत् ॥ ३९९ ॥

वैद्याहरूं भिषक्पीमाभ्रातितीम्रं विषापहम् ।
एतत्तैलं महावीर्यममृतसारमयमिव परम् ॥ ४०० ॥

बिन्दुत्रयेण देवेषि नस्यं कुर्याद्विचक्षणः ।
निर्विषं कुरुते भद्रे स्थावरं जङ्गमं च यत् ॥ ४०१ ॥

सर्वप्राणिहितार्थाय शिववक्त्राद्विनिस्सृतम् ।
तत्तैलं यत्र भवने नित्यमेव प्रतिष्ठितम् ॥ ४०२ ॥

तत्र नागा न हिंसन्ति विषं नाक्रमते शुभे ।
वधूगृहाच्छरपानेन सर्पस्तत्र न म्रियते ॥ ४०३ ॥

तत्तैलं लेपयित्वा तु भेरीढक्कादि ताडयेत् ।
तच्छब्दश्रवणान्मर्त्यो निर्विषाः स्युर्विषातुराः ॥ ४०४ ॥
(शिवतत्त्वसुधाकरे)

सर्वेषु सर्पे ।

मधुकं तगरं कुष्ठं भद्रदारुहरेणवः ।
मञ्जिष्ठा तालपत्राणि नागपुष्पोत्पलं मिषम् ॥ ४०५ ॥

त्रिजाती चन्दनं पत्रं प्रियंगुध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च शारिवे सुरसा नदी ॥ ४०६ ॥

कल्कैरेषां घृतं सिद्धमलेप्यमिति विश्रुतम् ।
विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं दनिम् ॥ ४०७ ॥

नागसर्पे ।

अपामार्गस्य बीजानि शिरीषस्य फलानि च ।
द्वे हे काकमाची च गवां मूत्रेण पेषयेत् ॥ ४०८ ॥

सर्पिरेतेषु संसिद्धं विषसंशमनं परम् ।
अमृतं नामविख्यातमपि संजीवयेन्मृतम् ॥ ४०९ ॥
(सौश्रुते)

प्रशान्तदोषं प्रकृतिस्थधातु-
माहारकामं समसूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ४१० ॥

इति योगरत्नसमुच्चये विषचिकित्साधिकार
एकोनत्रिंशः ॥

## अथ रसायनवाजीकरणाधिकारः ।

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ।
पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ ३ ॥
अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजीकरो वा मलिने वस्त्रे राग इवाफलः ॥ ४ ॥

ग्राम्यादीनि वर्ज्यानि ।

सर्वे च दोषा भवन्ति । ग्राम्यादाहारादम्ललवणकटुकषायवि-
दग्धासात्म्यरूक्षाभिष्यन्दिक्लिन्नगुरुपूतिपर्युषितनवधान्यशुष्कशाकाम-
मांसतिलकुलत्थदधिशुक्तकाञ्जिकपिष्टान्नविरुद्धकोनेपोचणां दिवास्वप्न-
स्त्रीमद्यनित्यानां विषमातिमात्रसंक्षोभितवपुषां क्रोधलोभभयशोकायास-
बहुलानां पापकर्मणामसमञ्जसाहारविहारनिर्हारनिरतानाम् ॥

वातातपादयो योगाः ।

कुलत्थदधिशुक्तानि तैलाभ्यंगाग्निसेवनम् ।
वातातपविधानेऽपि विशेषेण विवर्जयेत् ॥ ५ ॥

व्यायामातपमारुतचेतः सन्तापगुरुनिद्राहादि ।
उपयोगादपि परतो द्विगुणं परिवर्जयेत् कालम् ॥ ६ ॥

कुलत्थान् काकमाचीं च कपोतां च सदा त्यजेत् ।
पिबेन्माहेन्द्रमुदकं कौपं प्रस्रवणाम्बु वा ॥ ७ ॥

कुटीप्रवेशः क्षणिनां परिच्छदवतो हितः ।
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः ॥ ८ ॥

वातातपसहा योगा ।

वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥ ९ ॥

खदिरादिरसायनम् ।

खदिरासनयूपभाविताया-
स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो
यदि जीवन्त्यजराः किमत्र चित्रम् ॥ १० ॥

शीतोदकादिरसायनम् ।

शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥ ११ ॥
(पाठदे)

अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिबेत् ।
वातपित्तकफाञ्जित्वा जीवेद्वर्षशतं नरः ॥ १२ ॥
(तन्त्रान्तरे)

त्रिफलारसायनम् ।

दर्वीमलेपस्त्रिफलाकषाय-
स्सितोपलास्तैलमधुप्रगाढः ।
सपिप्पलीनागरलोहरेणु-
स्तनोः सपत्नीं जरसं निहन्ति ॥ १३ ॥
(संग्रहे)

अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिबेत् ।
मधुकेन तु काश्मर्या पिप्पल्या क्षौद्रसर्पिषा ॥ १४ ॥

१. 'क्षमिणां', २. 'सूर्यमारुतिको', ३. 'सुखोपचारात्' क. ख. पुस्तके
४. 'तुलाक्षीं' पुस्तकपाठः।

त्रिफला सितया चैव युक्ता सिद्धं रसायनम्।
विलङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ १५ ॥

संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा।
भवन्त्यायुःप्रदाः पुंसां जरारोगनिबर्हिणी ॥ १६ ॥
(चरके)

त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी।
चक्षुष्या दीपनी चैव विषमज्वरनाशिनी ॥ १७ ॥
नाशयेद्राजयक्ष्माणं अर्शोगुल्मेषु पूजिता।
वमिकण्डूप्रशमनी नाडीव्रणविशोधिनी ॥ १८ ॥
दृष्टिप्रसादजननी मेधास्मृतिविवर्द्धनी।

घृतान्विता वा मधुनान्विता वा
गुडान्विता तैलसमन्विता वा।
एषा हि शश्वन्मनुजैः प्रयोज्या
सर्वामयान्नाशयति प्रकर्षात् ॥ १९ ॥

वातरोगेषु तैलेन पित्तरोगेषु सर्पिषा।
मधुना कफरोगेषु प्रयोज्या त्रिफला नरैः ॥ २० ॥
निष्क्वाथ्य त्रिफलां पीता नाशयेत्तिमिरामयम्।
नेत्रस्रवथुदाहार्तिरागकण्डूपरिस्रवान् ॥ २१ ॥
त्रैफलस्य तु चूर्णस्य कृत्वा पलस्य तत्समम्।
भृङ्गराजरसेनैव कुर्यात्रि: सप्तभावितम् ॥ २२ ॥
लिह्यान्मधुघृताभ्यां तु पलार्धं प्रलिहन् पुमान्।
जीर्णे दुग्धोदनाहारो गुणानेतानवाप्नुयात् ॥ २३ ॥
प्रसन्नदृष्टिरव्याधिर्जितेन्द्रियबलानि षट्।
नीलालिकुलसङ्काशकेशराजिर्महाबलः ॥ २४ ॥
मेधावी स्मृतिमान्धीरः स्निग्धश्यामवपुर्युवा।
सुभगश्च सुरूपश्च स्त्रीशतानन्दवर्धनः ॥ २५ ॥
प्रावर्हरीतकीं खादेन्मध्याह्ने द्वे विभीतके।
रात्रौ स्वपंश्च पुरुषस्त्रयामलकानि च ॥ २६ ॥

यथेष्टचेष्टः पुरुषः षण्मासान्यः प्रयोजयेत् ।
व्याधयस्तस्य नश्यन्ति वलयः पलितानि च ॥ २७ ॥
त्रिफलाकल्ककर्षेण लोहपात्रं प्रलेपयेत् ।
तत्संस्थितमहोरात्रं तत समुद्धृत्य पाययेत् ॥ २८ ॥
लिह्याद्वा मधुसर्पिर्भ्यां मानवः प्रातरुत्थितः ।
त्रिमासाद्विधिनानेन जीवेद्वर्षशतत्रयम् ॥ २९ ॥
न चैव प्रभवेन्मृत्युर्नालक्ष्मीर्न विषं गरम् ।
न चौपसर्गिकाः केऽपि रोगाश्शारीरमानसाः ॥ ३० ॥

त्रिफलां परिचूर्णयेत् समांशां
सहयष्टीमधुकां पृथक् समांशाम् ।
मधुना सह सर्पिषा दिनान्ते
पुरुषो निष्परिहारमाददीत ॥ ३१ ॥
तिमिरक्षतरक्तराजिकण्डू-
क्षणदान्ध्यार्बुददाहवत्मोदरागाः ।
पटलं सहकाचमर्मबाधां
शमयत्येष निषेवितः प्रयोगः ॥ ३२ ॥
(सन्नाग्वरादिति चन्द्रटे)

हरीतकीकल्पः ।

आज्येनायसपात्रस्थां सायञ्चूर्णां हरीतकीम् ।
खादितः मत्पहं जन्तोर्जरारोगो न जायते ॥ ३३ ॥
(बिन्दुसारे)

गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥ ३४ ॥
(सङ्ग्रहे)

हरीतकी मनुष्याणां मातेव हितकारिणी ।
मातापि विक्रियां याति नोदरस्था हरीतकी ॥ ३५ ॥
हरीतकी दरिद्राणां सुखोपायं रसायनम् ।
पथ्यत्वे प्रवरा प्रोक्ता सर्वामयविनाशिनी ॥ ३६ ॥

तृष्णायां कण्ठशोषे च हनुस्तम्भे गलग्रहे ।
नवज्वरे तथा क्षीणे गर्भिण्यां तु न शस्यते ॥ ३७ ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ३८ ॥
हरीतकी तु सगुडा विश्वभेषजसंयुता ।
निहन्त्यामाशये रोगान्वज्रेणेन्द्रो यथासुरान् ॥ ३९ ॥

(आश्विनसंहितायां हरीतकीकल्पे)

हरीतकीं सर्पिषि सम्मताप्य समश्नतस्तत् पिबतो घृतं च ।
भवेच्चिरस्थायि बलं शरीरे सकृत्कृतं साधु यथा कृतज्ञे ॥ ४० ॥

(वाग्भटे)

चित्रकरसायनम् ।

चित्रकः कटुकस्तिक्तः पाके चोष्णः प्रकीर्तितः ।
कटुकत्वात् कफं हन्ति तिक्तत्वात् पित्तनाशनः ॥ ४१ ॥
औष्ण्याद्धन्त्यनिलं चापि चित्रकः सर्वरोगहा ।
तैलसर्पिः पयो यूषमस्तुदध्निसमन्वितः ॥ ४२ ॥
पेयया वापि पातव्यः कार्यो वा कुम्भचित्रकः ।
पिबेत्पथ्याशनो मासं निवाल्यदकं ततः ॥ ४३ ॥
तेन पीतेन कोष्ठस्था नश्यन्त्यर्शस्कृता गदाः ।
मेधावर्णस्वरकरः सर्पिषा सह योजितः ॥ ४४ ॥
रसायनविधानेन खजराश्च्यवनादयः ।
मेधाकान्तिवपुष्मन्तो जातास्ते देवसन्निभाः ॥ ४५ ॥

(हारीते)

भल्लातकादिरसायनम् ।

विडङ्गभल्लातकचित्रकाणां
गुडोत्तराणामभयान्वितानाम् ।
तैलेन चूर्णानि निषेवमाणं
शरीरिणं नोपपतन्ति रोगाः ॥ ४६ ॥

---

१. 'रसायनेनाजेनाश्युरचरा' ख. पाठः.

विडङ्गभल्लातकनागराणि
येऽश्नन्ति सर्पिर्मधुसंयुतानि ।
जरानदीं रोगतरङ्गिणीं ते
लावण्ययुक्ताः पुरुषास्तरन्ति ॥ ४७ ॥

शतावरीघृतरसायनम् ।

शतावरीकल्ककषायसिद्धं
ये सर्पिरश्नन्ति सिताद्वितीयम् ।
तान् जीविताध्मानमभिप्रपन्ना-
न्न विप्रलुम्पन्ति विकारचोराः ॥ ४८ ॥

पुनर्नवरसायनम् ।

पुनर्नवस्यार्धपलं नवस्य
पिष्टं पिबेद्यः पयसार्धमासम् ।
मासद्वयं तत्त्रिगुणं समां वा
जीर्णोऽपि भूयः स पुनर्नरः स्यात् ॥ ४९ ॥

वचारसायनम् ।

मासं वचामप्युपसेवमानाः
क्षीरेण तैलेन घृतेन वापि ।
भवन्ति रक्षोभिरधृष्यरूपा
मेधाविनो निर्मलमृष्टवाक्याः ॥ ५० ॥

अश्वगन्धारसायनम् ।

पीताश्वगन्धा पयसार्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्य सस्यस्य यथा सुवृष्टिः ॥ ५१ ॥

तिलकल्पः ।

दिने दिने कृष्णतिलप्रकुञ्चं
समश्नुतः शीतजलानुपानम् ।

पोषः शरीरस्य भवत्यनल्पो
दृढीभवन्त्यामरणाच्च दन्ताः ॥ ५२ ॥

(चाङ्गदे)

वाराहीरसायनम् ।

वाराहीमूलचूर्णस्य शतं मधुयुतं क्रमात् ।
युवा स्यात् पयसा पीत्वा मापाज्ययुगथात्तः ॥ ५३ ॥

(सिद्धसारे)

वाराही रजसा पिबेत् सह पयः संवत्सरं तद्भजो
लेह्यं वा मधुसर्पिषा मधुयुतान्प्रातस्तिलान्वा भजेत् ।
त्रीण्येतानि रसायनं सितकणाविश्वायसां चूर्णवान्
सर्पिस्तैलयुतः फलत्रयरसो दर्वी प्रलेपी तथा ॥ ५४ ॥

(नारायणीयात् ।)

दुग्धे वा मधुनि घृते च शर्करायां
वाराही दहनपुनर्नवान् त्रिचूर्ण्य ।
प्रक्षिप्तान् प्रतिदिनमादरेण सेवे-
त्तेजस्वी सकलगदापनोदलिप्सुः ॥ ५५ ॥

(तन्त्रान्तरे)

वाकुचीरसायनम् ।

वाकुची सतिला भुक्ता वत्सरात् कुष्ठनाशिनी ।

पथ्यादिरसायनम् ।

पथ्या चित्रकशृङ्गिबेरमुसलीच्छिन्नोद्भवानां रजः
तुल्यांशं गुडपाङ्कितं दिनमुखे लेह्यं जनैर्नित्यशः ।
धुर्यं पुष्टिकरञ्जरापलितहृत्तेजोबलावर्धनं
सर्वव्याधिहरं रसायनमिदं वर्षोपयोगाद्भवेत् ॥ ५७ ॥

अयोऽभयादिरसायनम् ।

अयोऽभया चित्रकमूलचूर्णान्यथाज्यस्नेहादिविमिश्रितानि ।
सितामधुभ्यां लिहतां नराणां न व्याधयो नैव जरा न मृत्युः ॥

(तन्त्रान्तरे)

मुण्डितिकारसायनम् ।

सपत्रमूलां सफलां गृहीत्वा
केदारजां मुण्डितिकां शुभेऽह्नि ।
प्रक्षाल्य तोयेन सुशीतलेन
छायाविशुष्कां क्रमशो विचूर्ण्य ॥ ७० ॥
तुलाद्वयं तस्य तु वस्त्रपूत
शुष्कस्य चूर्णस्य नवे तु कुम्भे ।
स्थितं विरिक्तः सुविशुद्धकोष्ठः
प्रक्षिप्य तस्मादुदनावपूरम् ॥ ७१ ॥
निगीर्य जीर्णे प्रथमं घृतस्य
स्तोकं पिबेदग्निबलानुरूपम् ।
शाकाम्लवर्ज्यं लवणेन हीनं
भुञ्जीत पश्चान्मधुरोपपन्नम् ॥ ७२ ॥
प्रवद्वयस्यास्य घृतोपयोगात्
सुजीर्णदेहोऽपि युवा मनुष्यः ।
बलेन नागेन्द्रसमोऽतिवीर्य-
दीप्त्यक्षयः कुञ्चितनीलकेशः ॥ ७३ ॥
सुगन्धिगन्धः सकृदुक्तधारी
जीवेच्च पञ्चाब्दशतानि कान्तः ।

गोक्षुररसायनम् ।

अनिष्टपाषाणपथश्मशान-
जीर्णालयग्रामसमीपजातम् ॥ ७४ ॥
अपोह्य सुक्षेत्रनदीतटाक-
गोष्ठेषु जातं मधुपाददीनं ।
दरव्यपेतानिलपेयपक्वं
फलोन्मुखं गोक्षुरकं समृद्धम् ॥ ७५ ॥

[illegible]

दिताय भगतः केचित् पेतुस्तेऽमृतबिन्दवः ।
अथ तेषु प्रदेशेषु तेभ्यो जाता वरौषधी ॥ ८५ ॥
गडूची छिन्नरोहेति सैवोक्ता छिन्नरोहणात् ।
निर्दिष्टामृतवल्ली च यस्मादमृतसम्भवा ॥ ८६ ॥
कषायतिक्ता मधुरा रोचनी दीपनी हिता ।
उष्णा हृद्या च कण्ठ्या च हन्ति रक्तकफानिलान् ॥ ८७ ॥

अपरोऽप्रकारः ।

अङ्गुष्ठपर्वमात्रांश गडूच्याः परिलिप्य तान् ।
खण्डान्यः सर्पिषा भृष्टान् खादेत्सम नवाथवा ॥ ८८ ॥
नरः प्रतिदिनं मासं पथ्याहारपेप्सितः ।
जयेत्तृष्णाभ्रमश्वासकासार्शःशूलदेपथून् ॥ ८९ ॥
पिबेन्नरोऽमृतक्वाथं एरण्डसहयोजितम् ।
जयेद् गृध्रस्युदावर्तान् वातरक्तमशेषतः ॥ ९० ॥
कषायः छिन्नरोहाया निहन्त्याद्विषमज्वरान् ।
रात्रिज्वरज्वराजीर्णतृतीयकचतुर्थकान् ॥ ९१ ॥
निष्क्वाथोऽमृतवल्यास्तु शुण्ठीचूर्णसमन्वितः ।
पीतो हन्ति कटीपृष्ठपादजङ्घोरुगां रुजम् ॥ ९२ ॥
अमृतायाः पलशतं चूर्णीकृत्य तुला घृतम् ।
घृतक्षौद्रगुडानां तु प्रस्थमेकैकशः क्षिपेत् ॥ ९३ ॥
तद्यथाग्निबलं खादेन्नरो हितमिताशनः ।
नास्य कश्चिद् भवेद् व्याधिर्न जरा पलितं न च ॥ ९४ ॥
न गृध्रसी न वातास्रं न चैव विषमज्वरः ।
न च नेत्रगता रोगा वर्षं चैतद्रसायनम् ॥ ९५ ॥
मेधाकरं त्रिदोषघ्नं प्रयोगोऽयं विशेषतः ।

लशुनोत्पत्तिः ।

यतोऽमृतं वैनतेयो जहार सुरसत्तमः ॥ ९६ ॥
तस्माद् बिन्दुः पपातोर्व्यां लशुनं तत्र चाभवत् ।
रसायनाख्यं तेनाहि पलशुद्धिविवर्धनम् ॥ ९७ ॥

सन्धानं दोषशमनं वलीपलितनाशनम् ।

फल्कं ततो व्यञ्जनसंस्कृतं वा
सिद्धं तथामं रसमिक्षुकाण्डे ।
रसोनकन्दं परिपीडितं वा
यथा तथा वाप्युपयुज्यमानम् ॥ ९९ ॥

रसायनं नैकरुजापहं स्यात्
स्त्रीणां महर्षं प्रथमं करोति ।
मज्जासु वृद्धिं विरुजं च देहं
क्रमेण कुर्याद् बलवर्णयुक्तम् ॥ १०० ॥

विशोध्य देहं प्रथमं प्रयोज्यं
देवद्विजस्वस्त्ययनादि कृत्वा ।
व्यायामवातातपमैथुनानि
क्रोधं ह्यजीर्णं परिवर्जयेच्च ॥ १०१ ॥

वर्जयेच्चाप्यतीसारी मेही पाण्डुगदार्दितः ।
अरोचकी गर्भिणी च मूर्च्छामदनपीडिता ।
रक्तपित्ती च शोषी च यश्च च्छर्यर्दितो नरः ॥ १०२ ॥
(तन्त्रान्तरादिति चन्द्रटे)

लशुनकल्पः ।

राहोरमृतचौर्येण लूनाद्ये पतिता गलात् ।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ १०३ ॥
द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतेर्ग्रामणीस्स रसायनम् ।
शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्बणः ॥ १०४ ॥
घनोदयेऽपि वातार्त्तः सदा वा ग्रीष्मलीलया ।
शुद्धयोऽस्य परा मात्रा तदर्द्धं केवलस्य तु ॥ १०५ ॥
पलं पिष्टस्य तन्मज्ज्ञः स सक्तं प्राक् च शीलयेत् ।
प्रततं स्वेदनं चानु वेदनायां प्रशस्यते ॥ १०६ ॥

शीताम्बुसेकः सहसा वमिमूर्च्छाययोर्मुखे ।
विदाहपरिहाराय परं शीतानुलेपनम् ॥ १०७ ॥
प्रियाम्बुगुडदुग्धस्य माषमद्याम्लविद्विषः ।
अतितीक्ष्णैरजीर्णैश्च रसोनो व्यापदेद् ध्रुवम् ॥ १०८ ॥
पित्तकोपभयादन्ते युञ्ज्यान्मृदुविरेचनम् । (वाग्भट)

पिप्पलीवर्धमानम् ।

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ॥ १०९ ॥
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ।
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्तितः ॥ ११० ॥
प्रयोगोऽयं त्रिपर्यन्तः स कनीयान्स चाबलैः । चरके,
तिस्रस्तिस्रस्तु पूर्वाह्ने भुक्त्वाग्रे भोजनस्य च ॥ १११ ॥
क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् । (चरके),
वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ॥ ११२ ॥
जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥ ११३ ॥
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।
तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ॥ ११४ ॥
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ।
यक्ष्ममेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ॥
घ्नन्ति शोफं वमिं हिक्कां प्लीहानं वातशोणितम् ॥ ११५ ॥
(च द.)

मूषलस्य पलान्यष्टौ शर्करायाश्च सप्ततिः ।
तदर्धं माक्षिकं प्रोक्तं माक्षिकार्धं भवेद् घृतम् ॥ ११८ ॥
शतावरीसमं दद्याद्विदारीकन्दचूर्णितम् ।
एतत्सर्वं समालोड्य घृतभाण्डे विनिक्षिपेत् ॥ ११९ ॥
पलार्धमुपयुञ्जीत यथेष्टं स्याच्च भोजनम् ।
प्रमेहान्विंशतिं चैव तथाष्टावुदराणि च ॥ १२० ॥
कफ गुल्मांश्च शूलांश्च पाण्ड्वाख्यं मदरं गरम् ।
अष्टादशापि कुष्ठानि ग्रहणीं सप्तविधां च वत् ॥ १२१ ॥
अर्शांसि ग्रहणीदोषमुदावर्तं विशेषतः ।
अशीतिं वातजान् रोगान् नाशयेन्नात्र संशयः ॥ १२२ ॥
इदं रसायनं श्रेष्ठं विदेहाधिपनिर्मितम् ।

(तन्त्रान्तरे)

निम्बस्य तैलं प्रकृतिस्थमेवं नस्ये निषिक्तं विधिना यथावत् ।
मासेन गोक्षीरभुजो नरस्य जराभिभूतं पलितं निहन्ति ॥ १२३ ॥

(अमितम्)

निम्बपञ्चाङ्गरसायनम् ।

कृष्णनिम्बस्य पञ्चाङ्गं त्रिफला कटुकत्रयम् ।
फालं तिलं वचा कान्तं वाकुची कृष्णजीरकम् ॥ १२४ ॥
निम्बस्य समभागस्तु चोपचीदशकं तथा ।
विशालपलमात्रं तु कुर्यात्सन्धातकल्पनः ॥ १२५ ॥
रसायनमिदं श्रेष्ठं मेहार्शोऽग्निनाशनम् ।
अष्टादशापि कुष्ठानि कास श्वास ज्वरं तथा ॥ १२६ ॥
कायाभिवर्द्धनं चैव वलीपलितनाशनम् ।
ब्रह्मचारिणे प्रोक्तं अश्विभ्यामेतदुत्तमम् ॥ १२७ ॥

(तन्त्रान्तरे)

रसायनं प्रवक्ष्यामि ब्रह्मणाभिनिर्मितम् ।
मार्कण्डेयप्रभृतिभिरुपयुक्तं महर्षिभिः ॥ १२८ ॥
पुष्पकाले तु निम्बस्य कुसुमानि समाहरेत् ।
फलकाले फलं चैव मूलं पत्रं त्वचं तथा ॥ १२९ ॥

चित्रकोऽथ विडङ्गानि वत्सकोऽरुष्करं तथा ।
व्याधिघातहरीतक्यः शुण्ठी चामलकैः सह ॥ १२० ॥

षडंशं लोहचूर्णं च भृङ्गस्वरसभावितम् ।
अरिष्टखादिराभ्यां च भावयेन्निम्बपञ्चकम् ॥ १२१ ॥

भावयित्वा पुनः पिष्टैकस्थानं च कारयेत् ।
ततो विडालपदकं सर्पिषा माक्षिकेन वा ॥ १२२ ॥

उष्णाम्बुना वा तत्पीतं तत्क्षणादेव जीर्यति ।
हन्यात्सर्वाणि कुष्ठानि सप्त चैव महाभयान् ॥ १२३ ॥

अर्शांसि वातगुल्मांश्च खालित्यं पलितानि च ।
वातातपसहो देव न चात्र नियमः क्वचित् ॥ १२४ ॥

ग्राम्यधर्मं च कुर्वाणो भोजनं सार्वकामिकम् ।
मासत्रयोपयोगेन सर्वरोगैर्विमुच्यते ॥ १२५ ॥

षण्मासस्योपयोगेन सर्वदोषैः प्रमुच्यते ।
वर्षमात्रोपयोगेन जीवेद्वर्षशतत्रयम् ॥ १२६ ॥

(भल्लातकामृत)

पथ्यारिष्टम् ।

काले रक्तदलसारबीजकुसुमैर्निम्बस्य तुल्यांशकैः
कृत्वा चूर्णमिदं कटुत्रयनिशाधात्र्यक्षपथ्यायुतम् ।
पथ्यारिष्टमिदं पयो-मधुघृतैरुष्णाम्बुना वा पिबेत्
हिक्काकासहरं प्रमेहपिडकाकुष्ठादिभिर्मुच्यते ॥ १२७ ॥

(तक्रभल्लातक)

शुण्ठ्यारिमेदवरोपल-
कान्ताकोलैः समं लिहन्निशाम्लम् ।
षड्भिर्धातुभिरामय-
मरितं जित्वाजरां जरां जयति ॥ १२८ ॥

([illegible])

महाभल्लातकः ।

पिष्टस्वेदनमरुजैः
पूर्णे भल्लातकैर्विजर्जरितैः ।
भूमिनिखाते कुम्भे
भविविधं कृष्यन्दितसह् ॥ १२९ ॥

परिवारितं समन्तात् पचेत तद्गोमयाग्निना मृदुना ।
तस्तनरसो यश्च्यवते गृहीयात्तं दिनेऽन्यस्मिन् ॥ १४० ॥
अमुमुपयुज्य स्वरसं मध्वष्टमभागिकं द्विगुणमर्पिः ।
पूर्वविधियन्त्रितात्मा प्राप्नोति गुणान् स तानेव ॥ १४१ ॥

भोजनद्रव्यभल्लातकरसायनम् ।

सहामलकशुक्तिभिर्दविमरेण तैलेन वा
गुलेन पयसा घृतेन यवसक्तुभिर्वा सह ।
तिलेन सह माक्षिकेण पललेन सूपेन वा
वपुष्करमरुष्करं परममेध्यमायुष्करम् ॥ १४२ ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यत्र भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम् ॥ १४३ ॥
(वाग्भटे)

धेनुकादिरसायनम् ।

धेनुकण्टफनीमूलविदारीत्रिफलाः समाः ।
अरुष्करं च गन्धि मुसलीरक्तचित्रकम् ॥ १४४ ॥
अमृतैकादशैतानि चूर्णीकृत्य ततः पुनः ।
पुराणगुळमध्याज्यैरेकीकृत्य यथाबलम् ॥ १४५ ॥
योऽश्नीयात् सिद्धदेहः सदा जायते जराभृती ।

अथ वेल्लादिरसायनम् ।

वेल्लादीनां पलं पथ्या समवेकैकमिष्यते ॥ १४६ ॥
मरिचं वसुभिः कार्यमादित्यैः स्यादरुष्करम् ।
सद्युपपा प्रहरुद्राणां मुसली चूर्णमिष्यते ॥ १४७
चूर्णं तुल्यगुळोन्मिश्रं तदर्धं मधुसंयुतम् ।
तदर्धघृतसंयुक्तं घृतभाण्डे स्थितं पुनः ॥ १४८ ॥
पक्षत्रयं धान्यराशौ निधायोद्धृत्य तत्पुनः ।
उपयुञ्जीत सप्ताहात् सर्वव्याधिविनाशनम् ॥ १४९ ॥
वलीपलितहानिश्च षण्मासानस्य जायते ।
संवत्सरोपयोगेन शतमायुः प्रजायते ॥ १५० ॥
सुरसं नस्सनान् अनिद्रादयान्द्रयोजितम् ।

विडङ्गादिरसायनम् ।

बिडङ्गगोक्षुरविदारिकन्दत्रिफलाः पृथक् पालिकाः । मरिच-
ठं, रक्तचित्रकं दशपलं, अरुष्करं द्वादशपलं, मुसली विंशति-
अमृता पञ्चविंशतिपला । तदेतच्चूर्णं पटपूतम् एकाशीतिपलम् ।
गुलमेकाशीतिपलं, मधु चत्वारिंशत्पलम् । अर्धपलाधिकं घृतं
तिपलं निष्कद्वयाधिकं निष्कमारभ्य यावत्पञ्चनिष्कं यथासह्यं
।।

शतावरीसर्पिः ।

शतावर्यास्तु मूलानां स्वरसाढकतः पचेत् ।
विदारिगन्धांशुमतीदर्भकाण्डेक्षुगोक्षुरैः ॥ १५१ ॥
पृथगेषां दशपलान् समांशान् सकशेरुकान् ।
वर्षाभूक्षीरिवृक्षत्वक् पयस्या सविदारिका ॥ १५२ ॥
पलशः पञ्च गृह्णीयात्सुधौतान् परिशोषितान् ।
द्रोणद्वये जले पक्त्वा चतुर्भागावशेषिते ॥ १५३ ॥
त्रिमानं सर्पिरेतच्च त्रिमानैश्चेक्षुवारिभिः ।
अजापयश्चतुर्मानैः पचेत्कल्कं च कर्षशः ॥ १५४ ॥
दीर्घायुर्गोपतीहिङ्गुतुकाक्षीरीं मधूलिकाम् ।
मधूकपुष्पं मधुकमृद्वीकां सपरूषकाम् ॥ १५५ ॥
विदारीं कट्फलं मांसीं ग्रन्थिं मरिचमागधीम् ।
उशीरं चन्दनं शुण्ठीं धातकीं सैन्धवं तिलान् ॥ १५६ ॥
माषानिदिग्धिकापुष्पं पिष्ट्वा तत्रैव दापयेत् ।
मन्दाग्निनैव विपचेद्यावच्चिक्कणतां व्रजेत् ॥ १५७ ॥
परिस्रुते दशपलां सितां दत्त्वाल्पशः पचेत् ।
शीतीकृत्य द्विकुडवं मधु पात्रे प्रदापयेत् ॥ १५८ ॥
इदं शतावरीसर्पिः पश्चं धान्ये निधापयेत् ।
महाकशाङ्के दद्याद्वातपित्तनिबर्हणम् ॥ १५९ ॥
हस्तपादशिरोदाहे तृष्णाकासाग्निहोदरे ।
दकोदरे योनिदाहे क्षते क्षयविसर्पके ॥ १६० ॥

१ 'महाशतावरीघृत'मिति च नामान्तरं दृश्यते ।

ऊरुस्तम्भे चिरगते सुप्तवातेऽवबाहुके ।
वातशोणितके रक्ते गुल्मे स्त्रीणां महासृजि ॥ १६१ ॥
रक्तार्शःस्वतिसारासृक् पित्ते पित्तकृते ज्वरे ।
सूर्यावर्ते च तिमिरे मुखपाके हलीमके ॥ १६२ ॥
कामिला पाण्डुरोगे च योनिव्यापदि भूयसि ।
शुक्रदोषेऽप्युदावर्ते सोष्मवातेऽरुचौ हितम् ॥ १६३ ॥
एतद्रसायनं श्रेष्ठमेतन्मेधाविवर्द्धनम् ।
अलक्ष्मीहरणं चैतदेतच्चक्षुष्यमुत्तमम् ॥ १६४ ॥
उन्मादं नाशयेदेतत्तथापस्मारं स्वरक्षयम् ।
बलं निवर्धयेदेतत्कान्तिं शोभामनुत्तमाम् ॥ १६५ ॥
सभृङ्गस्वरसं पीत्वा चोराद् भीतो न दृश्यते ।
जातरूपेण तत् पीत्वा राजानं वशमानयेत् ॥ १६६ ॥
नाग्निना दह्यते पीत्वा न विषेण च हन्यते ।
यस्योदरे घृतं तिष्ठेत् मतिवादी न तं जयेत् ॥ १६७ ॥
न तं पिशाचाः पश्यन्ति बालं मुञ्चन्ति तद्ग्रहाः ।
रक्षांसि च पलायन्ते यत्र तिष्ठति तद् घृतम् ॥ १६८ ॥
अश्विनौ प्रार्थयामासुर्नरा रोगशतातुराः ।
ददौ शतवरौ तेभ्यः प्रतिश्रुत्य शतं वरान् ॥ १६९ ॥
(महापाने)

असिततिलविमिश्रं पञ्चकं भक्षयित्वा
सघृतमधुरभोजी भृङ्गराजस्य जीर्णे ।
स भवति चिरजीवी व्याधिनिर्मुक्तदेहो
भ्रमरसदृशकेशः कान्तियुक्तो मनुष्यः ॥ १७० ॥
भृङ्गं समूलं परिशोष्य शुष्कं तिलार्धकं चामलकार्धकं च ।
घृतप्लुतं भक्षयतां नराणां न व्याधयो नैव जरा न मृत्युः ॥
पञ्चमहास्समूलायामऽस्मचूर्णं त्रिगुणः ।
मधुसर्पिःसमायुक्तं समात्रं तु भक्षयेत् ॥ १७२ ॥
इत्याहारविहारोऽपि पथ्यामेन फलं शृणु ।
पलीपलितनिर्मुक्तो दृढदन्तश्च जायते ॥ १७३ ॥

कान्तिमान् वल्लभः स्त्रीणां वृद्धोऽपि च युवा भवेत् ।
टङ्कणं मरिचं तुत्थं पृथक् कर्षद्वयं तथा ॥ १७४ ॥
सिन्दूरं द्वादश तथा दश निष्कमयोमलम् ।
कान्तं भस्म रसे मृष्टं पुटपक्वं वरारसे ॥ १७५ ॥
चूर्णान्येतानि संयोज्य स्थापयेत् शुद्धभाजने ।
शुद्धदेहो नरस्तस्य पादं यद्व भोजनोत्तरम् ॥ १७६ ॥
अथाल्पपथ्या ततः स्वल्प ततस्ताम्बूलभाग् भवेत् ।
बहुनात्र किमुक्तेन रसायनमयन्त्रणम् ॥ १७७ ॥
अर्शः शोथग्रहण्योर्ज्वरजठरजराकोष्ठमेदो विकाराः
मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः ।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपहरति जलं पीतमन्ते निशायाः ॥
यत्रर्क्षे व्याधिरुत्पन्ना तस्य दैवं तरु सुगान् ।
प्रीणयेज्जलिदानाद्यैः रोगशान्त्यै स ... द्विजः ॥ १७९ ॥
मूलं तस्य पुनर्नवस्य पयसा पक्वं च तच्चूर्णितं
प्रातर्भक्षितवान् गुलाज्यसहितं हुत्वा यथेष्टाशनः ।
दुर्नामोदरपाण्डुगुल्मरुधिरप्लीहार्द्धिशोफामया-
न्मासेनैव निहन्ति कृष्णाशिरसा जीवेच्छतायुर्नरः ॥ १८० ॥
किमत्र चित्रं यदि वज्रवल्ली ससेविता शर्करया घृतेन ।
मासेन रोगान्विनिहन्ति सर्वान् मासत्रये यौवनमाप्नोति ॥
युगस्वभावाद्यदि चौषधीनां
क्रियासु शक्तिः परिकल्प्यतेऽल्पा ।
आयुर्बलादिष्वपि सा तथेति
यत्नादपेक्ष्याणि रसायनानि ॥ १८२ ॥
न चौषधीनामपि सर्वथैव
प्रभावहानिः परिशङ्कनीया ।

१. 'परिकल्पनीया' मुद्रितपुस्तकपाठ

फलं प्रयात्यूर्ध्वमधश्चिह्नतु
प्रत्यक्षतः कस्य न सिद्धमेतत् ॥ १८३ ॥

अदेशकालोपहितान्यसात्म्या-
न्यत्युष्णतीक्ष्णानि यथौषधानि ।
नाशं नयन्ते सहसैव देहं
सम्यक् प्रयुक्तानि तथैव वृद्धिम् ॥ १८४ ॥

रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ १८५ ॥

आयुर्योगास्त्वाध्वपि युक्ता मृदुवह्नौ
सानर्थक्यं यान्ति कृतान्यप्युपकाराः ।
दीप्ते वह्नौ ते तु गुणाधैरपि तुच्छा
विस्तार्यन्ते पात्रनिविष्टा इव भोगाः ॥ १८६ ॥

वाजीकरणविधि ।

वाजीकरणमन्विच्छेत्सततं विषयी पुमान् ।
तुष्टिः पुष्टिरपत्यञ्च गुणवत्तत्र संश्रितम् ॥ १८७ ॥

वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ।
तद्वाजीकरणं तद्धि देहस्योर्जस्करं परम् ॥ १८८ ॥

चिन्ताजराभ्यां शुक्रं तु व्याधिभिः कर्मकर्शनात् ।
क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥ १८९ ॥

शुष्कधान्याम्लक्षारादविरूक्षादसेवनात् ।
अतिदेवोद्विग्नशल्यात्मनोपतपनः श्रमात् ॥ १९० ॥

स्त्रीणामवीजकत्वाद्दोषदर्शनादविचारतः ।
मेढ्रामयात् शुक्रवतः नोपपतोऽभ्यर्थशीलनात् ॥ १९१ ॥

वृद्धस्यापि स्त्रियो गन्तुं न शक्तिः स्यादनायते ।
वृद्धस्त्रीवाहलिनः केचिन्मार्गेषु दुर्दशाः ॥ १९२ ॥

सन्ति चाल्पाश्रयाः स्त्रीषु बलवन्तो बहुप्रजाः ।
नराश्चटकवत्केचिद् व्रजन्ति बहुशः स्त्रियः ॥ १९३ ॥
तस्मात्प्रयोगान्वक्ष्यामि दुर्बलानां बलप्रदान् ।
सुखोपभोग्यान् बलिनां भूयश्च बलवर्धनान् ॥ १९४ ॥

वाजीकरणयोगाः ।

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥ १९५ ॥
कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् ।
सिताघृतपयोऽशी स नारीषु वृषायते ॥ १९६ ॥
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा रासभायते ॥ १९७ ॥
पयः पयस्यया सिद्धं शुक्रकृत्साज्यमाक्षिकम् ।
शतावरीकल्करसे पयो दशगुणं घृतम् ॥ १९८ ॥
भृष्टं सपिप्पलीक्षौद्रशर्करं वृष्यमुत्तमम् ।
शतावरीरसप्रस्थं क्षीरप्रस्थचतुष्टयम् ॥ १९९ ॥
प्रस्थं घृतस्य शुक्रस्यांशं द्राक्षामांसी परूषकम् ।
जीवकर्षभयष्ट्याह्वबलामेदाकशेरुकम् ॥ २०० ॥
प्रियालबीजकाकोलीयुग्मं चैकत्र पाचयेत् ।
पक्वपूते क्षिपेच्चास्मिन् कुडवांशां सितोपलाम् ॥ २०१ ॥
पुष्टिक्षीरानुपः प्राश्य तन्नारीषु वृषायते ।
विजयेत च वातास्रपित्तास्रोरःक्षतक्षयान् ॥ २०२ ॥
बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
यः खादेत्ससितान्गच्छेत् स स्त्रीशतमपूर्ववत् ॥ २०३ ॥
वर्षाभूमूलमृद्वीका स्वयंगुप्ताफलानि च ।
सिद्धश्चरणलेपोऽयं ध्रुवं पद्भ्यां तु न स्पृशेत् ॥ २०४ ॥
यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् ।
मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ २०५ ॥

(न्द्वदे)

शष्कुलिकाप्रयोगः ।

तिलात्मगुप्तामाषाणां चूर्णं शालिरजःपयः ।
शष्कुल्यस्तैर्घृते पक्का भक्ष्या वृष्यतमा मताः ॥ २०६ ॥
(सिद्धसारे)

वृष्ययोगाः ।

विदारिकागोक्षुरमाषचूर्णं
पीत्वा सिताढ्यं पयसा तथैव ।
वृषायते सेक्षुरकात्मगुप्ता-
बीजं तथा दुग्धविपक्वमाषम् ॥ २०७ ॥

क्षीरेण पिष्ट्वा तु घृतेन पक्वं
माषं सुशीतं मधुना लिहन्वा ।
क्षीरानुपानं तु घृतेन यष्टी
शतं वधूनां व्रजति प्रहृष्टः ॥ २०८ ॥
(सिद्धयोगे)

घृतं शतावरीगर्भक्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुत्तमम् ॥ २०९ ॥
(चरके)

पुनर्नवां शिफायुक्तां कपिकच्छूफलान्विताम् ।
श्वदंष्ट्रेक्षुरकोपेतां चूर्णयित्वा शतावरीम् ॥ २१० ॥
दिनान्ते मधुनोपेतां प्रलिह्यान्मतिमान्नरः ।
कामयेत शतं स्त्रीणां वृद्धोऽप्यक्षयमैथुनः ॥ २११ ॥

कामवर्धनी शष्कुलिकाप्रयोगः ।

तण्डुलैः कोकिलाक्षस्य सतिलैः क्षौद्रसंयुतैः ।
घृते शष्कुलिकां पक्त्वा भक्षयेत्कामवर्धनीम् ॥ २१२ ॥
(विन्दुसारे)

वृंहणीगुटिका ।

शरमूलेक्षुमूलानि काण्डेक्षुस्त्वेक्षुवालिका ।
जीवन्ती जीवकोमेदा वीरा ऋषभको बला ॥ २१३ ॥

शतावरी पयस्या च विदारी कण्टकारिका ।
ऋद्धि गोक्षुरकं रास्ना सात्मगुप्ता पुनर्नवा ॥ २१४ ॥
एषां त्रिपलिकान्भागान्माषाणामाढकं नवम् ।
विपाचयेज्जलद्रोणे चतुर्भागं तु शेषयेत् ॥ २१५ ॥
तत्र पेष्याणि मधुकं द्राक्षा फल्गूनि पिप्पली ।
आत्मगुप्तामधूकानि खर्जूराणि शतावरी ॥ २१६ ॥
विदार्यामलकेक्षूणां रसस्य च पृथक् पृथक् ।
सर्पिषश्चाढकं दद्यात् क्षीरद्रोणं च तद्भिषक् ॥ २१७ ॥
साधयेद् घृतशेषं च सुपूतं योजयेत्पुनः ।
शर्करायास्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैः पृथक् ॥ २१८ ॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च ।
त्वगेलाकेसराणां च चूर्णैरर्धपलोन्मितैः ॥ २१९ ॥
मधुनः कुडवाभ्यां च द्वाभ्यां तत्कारयेद्भिषक् ।
पालिकां गुलिकां स्त्यानां तां यथाग्नि प्रयोजयेत् ॥ २२० ॥
एष वृष्यः परो योगो बृंहणो बलवर्धनः ।
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाम् ॥ २२१ ॥
(चरके)

लिङ्गवर्धनयोगाः ।

भूमिकदम्बस्वरस शतापितं माहिषं च नवनीतम् ।
दिवसदिवाकरतप्तं करोति मुसलोपमं मेढ्रम् ॥ २२२ ॥
गोसर्पिर्जलशूकं घृतं माहिषमेव च ।
एतेनोद्वर्तितं लिङ्गं मुसलीभवति क्षणात् ॥ २२३ ॥
(रत्यान्तरादिति चन्दके)

घृतमधुयुक्तं तैलं बृहतीजलशूकमात्मगुप्ता च ।
एभिर्वराङ्गवृद्धिः सप्तदिनं ताम्रभाण्डपर्युषितैः ॥ २२४ ॥
(इंद्रानन्दो हरि चन्द्रके)

मेदसा क्षौद्रमिश्रेण वराहस्य प्रलेपितम् ।
सम्यग्लिङ्गं रतान्तेऽपि स्तब्धतां न विमुञ्चति ॥ २२५ ॥

सौद्रेण सह संपिष्टं पुण्डरीकस्य केसरम् ।
यस्येच्छा यावती मेढ्रं तस्य तावद्विवर्धयेत् ॥ २२६ ॥
(बिन्दुसारे)

श्वेतार्कमूलवर्त्या वराहमेदःप्रदिग्धायाः ।
दीपस्तथ्यं पुरुषवराङ्गं धारयति संशर्वरीक्रोऽन्नम् ॥ २२७॥
एतदागमसिद्धत्वात्प्रत्यक्षफलदर्शनात् ।
मन्त्रवत् सम्प्रयोक्तव्यं न मीमांस्यं कथञ्चन ॥ २२८ ॥
(वाहटे)

वैद्यप्रशंसा ।

पितामहेन लोकस्य स्मृत्वा तदिदमव्ययम् ।
अकालमृत्युरक्षार्थमलोहं वर्म निर्मितम् ॥ २२९ ॥
दृष्ट्वा विषेऽप्यमृततां घृतादौ मारणात्मताम् ।
शास्त्रतत्त्वमविज्ञाय स दुरात्मा चिकित्सति ॥ २३० ॥
वैद्याश्चाश्रुतशास्त्रार्थाः मूर्खाश्चाप्रभविष्णवः ।
अकालमृत्यवो ह्येते विचरन्ति महीतले ॥ २३१ ॥
लोभयन्त्यातुरं मूढा ये चित्रैः कर्मकौशलैः ।
तेभ्यो रक्षेत्सदात्मानमात्मा यस्मात्सुदुर्लभः ॥ २३२ ॥
ते घुणाक्षरवत्किञ्चिदुत्थाप्य नियतायुषम् ।
घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम् ॥ २३३ ॥
रोगार्तस्य विपण्णस्य यत्नलभ्यस्सुखायुषः ।
अवैद्यो निर्घृणः क्रूरो यः करोति भिषग्जितम् ॥ २३४ ॥
पापस्य मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः ।
नरो नरकपाती स्यात्तस्य सम्भाषणादपि ॥ २३५ ॥
अतन्त्रीकृतशास्त्रार्थाश्शब्दमात्रोपजीविनः ।
राज्ञां प्रमादाद्राष्ट्राणि चरन्ति व्याधवृत्तयः ॥ २३६ ॥
विद्यासमाप्तौ भिषजां द्वितीया जातिरुच्यते ।
न वैद्यो वैद्यशब्दं हि लभते पूर्वजन्मना ॥ २३७ ॥
(चरके)

प्रधानः शल्यशास्त्रेऽहं तथा कायचिकित्सिते ।
मन्त्रान् बहून् विजानामि देवैर्दत्तश्च मे वरः ॥ २३८ ॥

एवं प्रकारवचनाः स्कन्धारोपितभेषजाः ।
पीडयन्त्यातुरान्वैद्या विचित्रैः कर्मकौशलैः ॥ २३९ ॥

तेभ्यो रक्षेत्सदात्मानमात्मा यस्मात् सुदुर्लभः ।
वैद्योऽपि व्याधितं सर्वं स्वपुत्रमिव पालयेत् ॥ २४० ॥

आतुरोऽपि समुत्तीर्य घोरं व्याधिमहार्णवम् ।
यो न पूजयते वैद्यं तत्तुल्यो नास्ति किल्बिषी ॥ २४१ ॥

(तन्त्रान्तरे)

अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
तान् वर्जयेत् भिषक्पाशान् पाशान्वैवस्वतानिव ॥ २४२ ॥

(वाग्भटे)

तान् कालपाशसदृशान् वर्जयेच्छास्त्रदूषकान् ।
सेवेत धर्मविज्ञानज्ञानपूर्णान् भिषक्तमान् ॥ २४३ ॥

अन्नपानानि पथ्यानि व्याधिनिर्घातमौषधम् ।
रसायनानि वृष्याणि प्राप्यन्ते वैद्यसंश्रयात् ॥ २४४ ॥

अराजका यथा देशा भर्तृहीना यथा गृहाः ।
आतुराद्यास्तथा पादाः शोच्या वैद्यानधिष्ठिताः ॥ २४५ ॥

दाहः शूल तृडाध्मानं क्षुत्क्षामत्वमरोचकम्[1]
कः प्राकृतो जयेद्रोगानित्यमन्योन्यरोधिनः ॥ २४६ ॥

मारुतामग्रहोन्मादमदान्सुसदृशाकृतीन् ।
को जानीयाच्चिकित्सेद्वा दुरभिज्ञान्क्रियाक्रमान् ॥ २४७ ॥

प्राणाचार्यं बुधस्तस्माद्धीमन्तं विजितेन्द्रियम् ।
अश्विनाविव देवेन्द्रः पूजयेदादृतस्सदा ॥ २४८ ॥

यज्ञस्य च शिरश्छिन्नमश्विभ्यां सन्धितं पुनः ।
पातिता दशनाः पूष्णो भगस्य च विलोचने ॥ २४९ ॥

---

१. 'कृच्छ्रमरोचकम्' इति ख. पाठः

राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः ।
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ॥ २५० ॥
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा ।
ताभ्यां वज्रभृतः कष्टो बाहुस्तम्भश्चिकित्सितः ॥ २५१ ॥
अश्विभ्यां सहितस्सोमं प्रातः पिबति वासवः ।
सौत्रामण्यां च भगवानाश्विभ्यां सह मोदते ॥ २५२ ॥
अश्विनोः कल्प्यते भागो यज्ञेषु ब्राह्मणैरपि ।
अश्विनौ वह्निरिन्द्रश्च वेदेषु सुतरां स्तुताः ॥ २५३ ॥
वैद्यावित्यश्विनौ तस्मात् पूज्येते विबुधैरपि ।
अजरैरमरैर्नित्यं सुखितैरेवमादृतैः ॥ २५४ ॥
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैस्सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥ २५५ ॥
(सङ्ग्रहे)

इति योगरत्नसमुच्चये रसायनवाजीकरणाधिकारस्त्रिंशत्तमः ।
समाप्तोऽयं योगरत्नसमुच्चयः ।

एतद्यशस्यममलं(धितमान ? वितताम)योग-
रत्नोच्चयं भिषगनन्तकुमारनामा ।
बालोऽपि यस्य धरणाद्भियतं भवे(न ? द्न)
शास्त्रे क्रियासु च (निर ? निराश) इति प्रसिद्धम् ॥

वैद्यशास्त्रकमनल्पसद्फलं
येन वै सुभिषजो भिषग्भितम् ।
सर्वरोगगणनाशनं ···
···· ··· ··· ॥

# APPENDIX.

## *Alphabetical Index of Authorities Quoted in Yogaratnasamuccaya.*

[*Note* :— I, II and III denote the three volumes in which Yogaratnasamuccaya has been published, *viz.* Sri Chithra Ayurveda Series, Nos. 5 and 6, and the present one, and the numbers following to the pages in the respective volumes. An authority occurring more than once in the same page is not indexed separately for each occurrence.]


BHARATIYA VIDYA BHAVAN